श्रीविश्वनाथो विजयते ।

# लिङ्गधारणचन्द्रिका ।

श्रीनन्दिकेश्वरविरचिता ।

काशीस्थमहामहोपाध्याय पण्डित श्री
शिवकुमारशर्ममिश्रकृतया शर-
न्नामिकया व्याख्यया समेता

काशीस्थजंगमवाटिकोन्नतविश्वाराध्यपीठाध्यक्ष-
श्री ५ महास्वामिनाम् ।

आज्ञावशंवदेन अल्लीगेरिग्रामवासिनन्दि-
केश्वरमठाध्यक्षकाशीनाथशास्त्रिणा ।





काश्यां
मेडिकलहालनामकमुद्रालये मुद्रयित्वा प्रकाशिता ।
सन् १९०५ ईसवी ।





[प्रथमवार १००० प्रति ।



काश्यां विस्तारितं येन वीरशैवमतं परं ।
दयालुः शिवयोगी च सोऽयं राजेश्वरो यमी ॥

श्रीविश्वनाथो विजयते ।

# लिङ्गधारणाचन्द्रिका ।

श्रीनन्दिकेश्वर विरचिता ।

काशीस्थमहामहोपाध्याय पण्डित श्री
शिवकुमारशर्ममिश्रकृतया शर-
न्नामिकया व्याख्ययासमेता

काशीस्थजंगमवाटिकोन्नतविश्वाराध्यपीठाध्यक्ष-
श्री ५ महास्वामिनाम् ।

आज्ञावशंवदेन अब्बीगेरिग्रामवासिनन्दि-
केश्वरमठाध्यक्षकाशीनाथशास्त्रिणा ।



काश्यां
मेडिकल्हाल्नामकमुद्रालये मुद्रयित्वा प्रकाशिता ।
सन् १६०५ ईसवी ।



मूल्यं रुपया ३) ] [ प्रथमवार १००० प्रति ।

# भूमिका ।

अयं लिङ्गधारणचन्द्रिका नामकग्रंथो नन्दिकेश्वराचार्येण वीरशैवानां सिद्धान्तेषु लिङ्गधारणावश्य कर्तव्यत्वप्रभृतिषु वैदिकागमिकप्रमाणोपष्टंभनाय मतान्तरावलम्बिभिरापादितानां शास्त्रविरोधादिदोषाणां निरासायच महतापरिश्रमेण कृतस्यास्य ग्रंथस्य कर्नाटकाक्षरे कतिपयवर्षेभ्यः प्रागमुद्रितस्यापि व्याख्यां विना स्थले स्थले समाश्रितानां मीमांसाधिकरणानां काठिन्येन सर्वोपकारदानानर्हत्वमाकलय्य सर्वसाधारण्येन वीरशैवानामुपकारमाधित्सुभिः काशीजंगमवाटिकामठस्थविश्वाराध्य पीठाचार्य श्रीराजेश्वरस्वामिभिः कठिणांशयप्रकाशिकां शरन्नाम्नीं व्याख्यां पण्डितवर महामहोपाध्याय श्री शिवकुमार मिश्र शर्मभिर्निर्माप्य एतया संवलितः देवाक्षरेणमुद्रयित्वा प्रकाशितः अस्यच ग्रंथस्यशोधनादिभारं मय्येवाध्यक्षेणार्पितासीदित्यध्ययनाभ्यासादिपरिश्रमव्यग्रतयाऽनवधानवशादज्ञानवशाद्वा ऽऽपतितामशुद्धिं नैसर्गिकसदयहृदयैर्विद्वद्भिस्सनिजभूषणमानवद्धेलं निरूप्य शुद्धिपत्रे दानायानुग्राह्योऽहमिति सविनयमभ्यर्थयेशास्त्रमर्मविज्ञान् विदुषः

काशीस्थ अब्बीगेरि ग्रामवासी काशीनाथशास्त्री ।

श्रीगणेशाय नमः ।

श्रीमते विश्वाराध्याय नमः ।

# लिङ्गधारणचन्द्रिका प्रारम्भः ।



वेदाः शास्त्राण्यागमा यत्प्रणीताः
पुंसामिष्टप्राप्तये ऽनेकरूपान् ।
कर्मोपास्तिज्ञानभेदेन भिन्नान्
हेतून् लोके ख्यापयन्ते नमो ऽस्मै ॥ १ ॥

बाणः कस्य बभूव पद्मनयनः कस्या भवत् पद्मभूः
यन्ता कस्य महीरथः समभवत् पत्त्राणि वेदास्तथा ।
त्रैलोक्यप्रलयाग्निवत्सवितत हालाहलं वा ऽपिबत्
को यः शम्भुमुपेत्य लोककुशलैर्देवः समाश्रीयताम् ॥२॥

श्रौते कर्मणि सन्ति वैदिकगिरो वैतानिके निष्ठिताः
स्मार्त्ते ऽपि स्मृतयो महर्षिविहिताः भूयस्य एवेदिताः ।
किन्त्वासामवधानतो हृदययुग्भावार्थसंवीक्षणे
तात्पर्यं परमेशतोषणविधावेकान्ततः सिध्यति ॥ ३ ॥

आस्तां राज्यमखण्डभूमिवलये स्वातन्त्र्यसौख्याञ्चितं
सामन्ताश्च जिता भवन्तु रिपवः कोशे धनेशोपमा ।
वेदाः स्वाङ्गरहस्यबोधसहिताः स्युर्वाग्विधेयास्तथा-
पीशानस्य पदारविन्दयुगले चित्तं न चेत् किं ततः॥४॥

तस्मादीश्वरतोषमेव मनुजो नित्यं विदध्यान् मनो-
वाक्कायैरिति सम्विभाव्य मुनयः प्रागवामदेवादयः ।
वैराग्येण निरस्य मानसगताः सांसारिकीर्वासनाः
स्वभ्यासेन निगृह्य चित्तमभवंस्तद्ध्यानलीनाशयाः॥५॥
यद्यप्यस्ति महेशलाभकृतये ज्ञानं परं कारणं
चित्तं शोधयितुं भवन्त्यपि तथा निष्कामकर्माण्यलम् ।
किन्त्वेतद्द्वयमप्यनन्तकरुणावारांनिधेः पादयो
र्भक्तेर्नार्हति षोडशीमपि कलामित्याहुराद्या बुधाः॥६॥
भक्तिश्चापि पराऽपरेति गदिताऽत्राऽऽद्याऽस्ति मुख्येरिता,
मुख्यत्वञ्च फलाभिसन्धिविरहस्तन्मात्रगप्रेमता ॥
यावद्भोगविरागवत्वमपि वा प्रेम्णैव चैतत्त्रयं
तद्भेदान्नवसंख्यकान् मुनिवरो द्वैपायनः प्रोक्तवान् ॥७॥
गौणी तूक्तविशेषणैर्विरहिता तावद्भिरेवान्विता
भेदैः प्रेम तु धर्मिभूतमभवत् सर्वान्वितं सूत्रवत् ।
तत्प्रेम स्मरणे श्रुतौ प्रणमने संकीर्त्तने सेवने
सर्वस्वात्मनिवेदनादिषु तथा संयोजयत्युत्कटम् ॥ ८॥
अत्रैवं सति चिन्त्यतां स्वमनसा प्रेमातिसीमं भवद्
देवस्मृत्यवियोगमेववलयत्तन्नित्ययोगेच्छया ।
ताद्रूप्येण विभावितस्य सततं लिङ्गस्य संधारणे
तीव्रोत्कण्ठतवत्करिष्यति न किं भक्तस्य चित्तं मुहुः ९

भक्त्यैकताने हृदये हि लोको
माहेन्द्रकौबेरपदादि तुच्छम् ।

मत्वा स्वकीयेष्टपदैकसक्तो
नक्तं दिवं ध्यानततिं तनोति ॥ १० ॥
इत्थं भक्तगतीत्त्वणे च बहुधा युक्त्यैव शंभोर्महा-
ज्योतिर्लिङ्गसमासनं निजतनौ सिद्धं भवत्यञ्जसा।
धर्मः केवलशब्दगम्य इति यत्संस्थापनं जैमुनेः
तस्माद्वेदगिरोपि तत्प्रमितये शैवैः समुद्भाविताः ॥१०॥
तासामन्यपरीभाववारणाय कृताऽभवत्।
स्वेष्टतात्पर्यलब्ध्यैच लिङ्गधारणचन्द्रिका ॥ ११ ॥
कामिकं वातुलं चैव मुकुटं वीरसंज्ञकम्।
आगमं स्कान्दलिङ्गे च प्राधान्येनाश्रयत्ययम् ॥ १२ ॥
साम्बशम्भोः परं तोषं विधातुं शम्भुपादयोः।
व्याख्या तस्याः शरन्नाम्नी विधायैषा समर्प्यते ॥ १३ ॥
लोकैषणा भवत्येव यद्यप्यत्र प्रवर्त्तिका।
तथापि किञ्चिद्गौरीशस्तुष्येदिति मनोगतम् ॥ १४ ॥
शम्भोः शिरसि विभ्राजच्चन्द्रमश्चन्द्रिकेव सा।
इमां शरदमासाद्य प्रकाशं परमेष्यति ॥ १५ ॥
पतिं गणानामथसेशगौरीं
सारस्वतञ्चापि महः प्रणम्य।
सम्प्रार्थ्यबोधं शिवतत्त्ववेत्रीन्
व्याख्यानमस्यास्समुपक्रमेद्य ॥ १६ ॥

तत्रादौ लिङ्गधारणस्याऽऽभ्यन्तरबाह्यलिङ्ग-धारणात्मकतया द्वैविध्येनोभयविधस्यापि तस्य

श्रुतिस्मृतिसिद्धत्वे साम्प्रतं निरूपणीये प्रथममाभ्यन्तरलिङ्गधारणस्य श्रुतिसिद्धत्वं बोधयितुं दहरविद्यायाः हृत्पुण्डरीकान्तरालवर्त्तिज्योतिर्लिङ्गविषयकत्वं प्रसाधयति ।

तैत्तिरीयके तु दहरं विपाप्ममित्यारभ्य तस्मिन् यदन्तस्तदुपासितव्यमित्यन्तेन उपासना विधीयते तत्किमित्याकाङ्क्षायां

'तैत्तिरीयक' इत्यादिना, दहरं विपाप्ममिति"। इदमत्रोपनिषन्मन्त्रस्वरूपम् "दहरं विपाप्मं वरवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थं, तत्रापि दह्रे गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यमिति" । "अत्रभाष्यम् 'यत्', एतत् पुण्डरीकम् अष्टदलम् हृदयकमलम् अस्ति । कीदृशम् दहरम् अल्पम् अङ्गुष्ठमात्रपरिमितत्वात्, विपाप्मम् चित्तैकाग्र्यस्थानत्वेन पापरहितम् वरवेश्मभूतम् वरस्य श्रेष्ठस्य परमात्मन उपलब्धिस्थानत्वेनोपास्तिस्थानत्वेन च गृहरूपम् 'पुरमध्यसंस्थं' हस्तपादादिभिस्सर्वैरवयवैः पूर्यत इति पुरं तस्य मध्ये कुक्ष्युरसोरन्तरावस्थितं तत्रापि तस्मिन्नपि पुण्डरीके दह्रे अल्पप्रदेशे 'गगनं' आकाशवदमूर्तं

ब्रह्मरूपमस्ति ब्रह्मणः सर्वगतत्वेपि घटाकाशवत् पुण्डरीकस्थानापेक्षया ऽल्पत्वमुपचर्यते तथा च श्रुत्यन्तरम्" "अथ यदिदमस्मिन् ब्रह्मपुरे दहरम् पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाश" इति दहराकाशस्य च ब्रह्मत्वं दहराधिकरणे निर्णीतम् अत एव विशोकः (च्छान्दसम् पुंस्त्वम्) शोकरहितं गगनशब्दवाच्यं ब्रह्म एवं सति तस्मिन् पुण्डरीके ऽन्तः मध्ये यद् ब्रह्मतत्त्वमस्ति तत् उपासितव्यम् विजातीयप्रत्ययरहितेन सजातीयप्रत्ययप्रवाहेण चिन्तनीयम्" इति अस्यां श्रुतौ "तत्रापि दह्रे गगनं विशोकः तस्मिन् यदन्तस्तदुपासितव्यमि"त्युक्त्या गगनस्यापि मध्ये वर्तमानं गगनशब्दवाच्यब्रह्मतत्त्वातिरिक्तमेव किञ्चिद्वस्तूपासितव्यमिति भ्रमः सम्भाव्यते तन्मासम्भावीति भाष्यकारेण विशोकान्तम् व्याख्याय मध्ये एवं सतीति योजितम् ततश्च तस्मिन् यदन्तरित्यत्र तत्पदेन गगनं न परामर्शनीयम् अपि तु व्यवहितमपि पुण्डरीकमेव परामृष्टव्यम् ततश्चायमर्थः फलति यतो हृत्पुण्डरीके ब्रह्मतत्त्वस्य वासस्थानम् अतः तस्मिन् वर्तमानं ब्रह्मतत्त्वमुपासितव्यमिति ।

यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः तस्य प्रकृतिलीनस्य यः

परः स महेश्वर इत्यनेन शिवशूली महेश्वर इति कोशावगतरूढ्या,

"योवेदादाविति" 'वेदस्य', अध्येतव्यस्य 'आदौ' प्रारम्भे 'स्वरः' स्वरघटितः प्रणवरूपः शब्दः 'प्रोक्तः' "ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा। स्रवत्य-नोंकृतं पूर्वं परस्ताच्च विशीर्यती"तिमानववाक्ये उच्चा-रयितव्यत्वेन विहितः, 'वेदान्ते' माण्डूक्योपनिषदादौ 'प्रतिष्ठितः' मात्राविभागेन व्याख्यातः 'तस्य' प्रणवस्य 'प्रकृतौ' कारणे मात्रात्मके ऽवयवे, 'लीनस्य' संहि-तया ऽविभागं प्राप्तस्य अ उम् इति विभक्तावस्थातः ओ ऽमित्यविभागावस्थां प्राप्तस्येति यावत्, 'यःपरः' मुख्यत्वेन प्रतिपाद्यः 'स महेश्वर' इत्यर्थः प्रणवस्यै-कैकमात्रया ब्रह्मविष्णुरुद्रा देवाः ऋग्यजुःसामानि वेदाः भूः भुवः स्वः इत्येते त्रयोलोकाः एवंरूपेण विशकलिताः पदार्था अभिधीन्ते, 'ओमिति समस्तेनतु सर्वसमष्ट्याश्रयरूपं माहेश्वरं तत्त्वमुच्यत इत्याशयः। इदञ्च माण्डूक्योपनिषदि गौडपादाचार्य-कारिकासुच स्पष्टम्। वेदभाष्ये तु "यो वेदादौ स महेश्वर" इति प्रतीकमुपादाय वेदानाम् "अग्निमीले पुरोहितम् इषेत्वोर्जेत्वेत्यादीनाम्" आदिः उपक्रमः तस्मिन्नुपक्रमे 'यः स्वरः' यो वर्णः प्रणवरूपोस्ति

स च स्वरः प्रणवः 'वेदान्ते च' उपनिषदि ओमित्ये-तदक्षरमिदं सर्वमित्यादिकायाम् 'प्रतिष्ठितः' प्रति-पादितः 'स च स्वरः' प्रणवः ध्यानकाले प्रकृतौ-अव्याकृते जगत्कारणे लीनोभवति। अकारोकारम-कारेषु विराड्हिरण्यगर्भाव्याकृतानि ध्यात्वा विराड्रूप-मकारमुकारे प्रविलाप्य तं चोकारं हिरण्यगर्भं मूलप्रकृतिरूपे मकारे प्रविलापयेत् तस्य च प्रकृतौ लीनस्य प्रणवस्य यः परः स चतुर्थमात्रारूपेण नादे ध्यातव्यः उत्कृष्टः अस्ति सः अयम् महेश्वरो विज्ञेयः। अनेन मन्त्रेण पूर्वोक्तगगनशब्दवाच्यं वस्तु प्रपञ्चित-मिति व्याख्यातम्।

## शिवैकान्तिकमहेश्वरपदावरुद्ध-वाक्येन,

"शिवैकान्तिकमहेश्वरपदावरुद्धवाक्येनेति" 'शिवैकान्तिकं, नियमेन शिव एव प्रयुज्यमानं यन्म-'हेश्वर इति पदं तद्युक्तेन "यो वेदादौ स्वरः प्रोक्त" इत्यादिवाक्येन।

## उपास्यवस्तु विधानात्,

"उपास्य वस्तु विधानादिति" तदुपासित-व्यमिति विहितामुपासनामनूद्य सा किं विष्णुविष-

यिणी शिवविषयिणी वेति जिज्ञासायां "योवेदादौ स्वरः प्रोक्त" इत्यनेन महेश्वरविषयिणी सेति निर्णयस्य प्रत्यासत्तिन्यायसहायेन करणादित्यर्थः तेन विधेयताबोधकलिङ्गादि पदाभावेपि न क्षतिः।

उपासनाया गुणविषयत्वेन, तत्किं गुणकमित्याकाङ्क्षायां ॥

"गुणविषयकत्वेनेति "तं यथा यथोपासते तत्तदेव भवती" ति श्रुतेः। उपासनायाः स्वप्रकारी-भूतगुणानुरोधेनैव तत्तत्फलप्रयोजकतया निर्विकल्पकातिरिक्तज्ञानस्य स प्रकारकत्वनियमाच्चोपासनाया गुणविषयकत्वमिति भावः।

ऋतं सत्यं परं ब्रह्मेति मंत्रेण परमशिवासाधारणगुणविधानाच्च ॥

"ऋतं सत्यं परं ब्रह्मेति"। ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वैनम" इत्यस्मिन्नेव प्रकरणे पठितमन्त्रेण कृष्णपिङ्गत्वोर्ध्वरेतस्त्वविरूपाक्षत्वरूपाणां त्रयाणां धर्माणां विरूपाक्षस्त्रिलोचन इति कोशवशात् शिवैकनिष्ठत्वेन निर्णीतानाम् उपास्य विशेषणतया विधानात् परमशिवविषयिण्येव दहरविद्येति गम्यते।

"ऋत" मित्यादिमन्त्रार्थस्तु भाष्ये एवं दर्शितः यदेतत्परं ब्रह्म तत्सत्यम् अबाध्यम् सत्यञ्च द्विविधं व्यावहारिकं पारमार्थिकञ्च हिरण्यगर्भादिकं रूपं व्यावहारिकं सत्यं तन्निवारणेन पारमार्थिकसत्यं प्रदर्शयितुम् ऋतं सत्यमिति विशेष्यते अत्यन्तं सत्यमित्यर्थः तादृशं ब्रह्म स्वभक्तानुग्रहायोमामहेश्वरात्मकं पुरुषरूपं भवति तत्र दक्षिणे महेश्वरभागे कृष्णवर्णः उमाभागे पिङ्गलवर्णः स च योगेन स्वकीयं रेतः ब्रह्मरन्ध्रे धृत्वा ऊर्ध्वरेता भवति त्रिनेत्रत्वाद्विरूपाक्षः तादृशं परमेश्वरमनुसृत्येतिशेषः। विश्वरूपाय जगत्कारणत्वेन सर्वजगदात्मकाय विरूपाक्षाय पुरुषायैव नमस्कारोऽस्त्विति,।

शिवतत्त्वस्वरूपं तदित्यवगम्यते नन्वस्यामेवोपनिषदि "सहस्रशीर्षं देव" मित्यनुवाके न हस्रशीर्षत्वादिगुणकस्य नारायणस्याभिहितत्वेन तस्यैव दहरोपासनोपास्यत्वं किं न स्यादिति चेन्न।

"नन्वस्यामेवोपनिषदि—सहस्रशीर्षं देवमित्यनुवाकेनेति" अयमस्ति सोऽनुवाकः "सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम्। विश्वं नारायणं देवमक्षरं

परमं प्रभुम् । विश्वतः परमं नित्यं विश्वं नारायणं हरिम् । विश्वमेवेदं पुरुषः तद्विश्वमुपजीवति पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् नारायणं महाज्ञेयं विश्वात्मानं परायणम् नारायणः परोज्योतिरात्मानारायणः परः नारायणः परं ब्रह्म तत्त्वं नारायणः परः नारायणपरो ध्याता ध्यानं नारायणः परः यच्च किञ्चिज्जगत् सर्वं दृश्यते श्रूयते पिवा ॥ १ ॥ अन्तर्वहिश्चतत्सर्वं व्याप्य नारायणःस्थितः अनन्तमव्ययं कविंसमुद्रेऽन्तं विश्वशम्भुवम् पद्मकोशप्रतीकाशं हृदयञ्चाप्यधोमुखम् अधोनिष्ठ्या वितस्त्यान्तु नाभ्यामुपरितिष्ठति ज्वालमालाकुलं भाति विश्वस्यायतनं महत् सन्ततं शिराभिस्तु लम्बत्याकोशसन्निभम् तस्यान्ते सुषिरं सूक्ष्मं तस्मिन्सर्वं प्रतिष्ठितम् तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः सोऽग्रभुग्विभजन्तिष्ठन्नाहारमजरः कविः तिर्यगूर्ध्वमधश्शायीरश्मयस्तस्य सन्तता सन्तापयति स्वं देहमापादतलमस्तकम् तस्य मध्ये वह्निशिखा अणीयोर्ध्वाव्यवस्थिता नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः सब्रह्म सशिवः सहरिः सेन्द्रः सोऽक्षरः परमस्स्वराड्इति" यद्यपि पूर्वानुवाकः यः परः समहेश्वर इत्यत्रैव समाप्तः ना-

रायणानुवाकश्च ततोभिन्न एव एतावन्मात्रेणैव पूर्वो-
क्तदहरोपासनाया महेश्वरविषयकत्वं सिद्धम् तथापि
हृदयपद्मकोशादीनां चर्चाया अस्मिन्नप्यनुवाके स-
त्वेनैतच्छङ्कोत्थानं बोध्यम् अत्रैतत्समाधानाय चन्द्रि-
काकारः कैवल्योपनिषदथर्वशिरःकठवल्लीवाक्यानि
समानविषयाण्याश्रित्य दहरविद्यायाः परमशिवविष-
यकत्वं प्रसाध्योक्तोपासनाया अनियतविषयकत्ववा-
रणायोपासनाधिकरणीभूतहृदयप्रतियोगित्वेन ना-
रायणस्योपनिबन्धम् उपासकाकांक्षाशान्त्यर्थं वर्णयति
नारायणस्य स्वहृदयपुण्डरीकेऽनितरसाधारणज्यो-
तिर्लिङ्गानुसन्धानेन ब्रह्मभावापन्नतया "नारायण
परं ब्रह्म तत्वं नारायणः परः" इत्यादिवाक्यान्यपि
योजयति, "नारायणात् परमिति" पञ्चमी सामासेपि
कस्यचिच्छैवस्याशयं दर्शयति परं तु नारायणोप-
निषद्गतानां सर्वेषां वाक्यानां स्वारस्येनैवं प्रकारेण
योजयितुमशक्यत्वान्निष्पक्षपातबुद्धिभ्य इदं व्याख्यानं
नरोचिष्यत इति नराणां समूहः अयनं यस्येति व्यु-
त्पत्तिमाश्रित्य अनुवाकत्रयस्योपक्रमोपसंहारपर्य्या-
लोचनेन च परमशिवमेव नारायणपदेन गृहीत्वा
प्रकृतोपासनाया अनियतविषयकत्वं वारणीयम् उपा-
सनाया मानसक्रियारूपतया एकस्मिन्नेवप्रतीकेऽनेको-
पासनायाः शास्त्रेषु दृष्टतया दहरोपासनाया अप्यनि-

यतविषयकत्वे—न काचित्क्षतिरित्यपि शक्यते वक्तुम् तथाषत्याभ्यन्तरलिङ्गधारणं नसिध्येदिति तु न भ्रमितव्यम् प्रथमानुवाकत्रितीयानुवाकानुसारेणोपासकानामाभ्यन्तरलिङ्गधारणसिद्धेर्निष्प्रत्यूहत्वात् देवयोरैक्येनसमाधानन्तु वीरशैवागमविरुद्धमित्युपेक्षितमिति बोध्यम् ।

“हृत्पुण्डरीकं विरजंविशुद्धं” ।

विचिन्त्यमध्ये विशदं विशोकम् अचिन्त्यमव्यक्तमनंतरूपं शिवं प्रशान्तममृतं ब्रम्हयोनिम् । तदादिमध्यान्तविहीनमेकं विभुं चिदानंदमरूपमद्भुतम् । उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तमिति कैवल्योपनिषद्वाक्येन बालाग्रमात्रं हृदयस्य मध्ये विश्वेदेवं जातवेदं वरेण्यमित्युपक्रमोपसंहारमध्यपरामर्शशिवैकान्तिकाथर्वशिरोवचेनेन ।

इतः परं यथालेखं मूलमनुसरामः “ नारायणस्येति ” तथा च यः परः स महेश्वर इति महेश्वर-

पदमेव महांश्चासावीश्वरश्चेति योगमाश्रित्य नारायणपरकत्वेनैव कथञ्चिन्नेयमिति शङ्कितुर्भावः। निराकरोति "नेति" "हृत्पुण्डरीकं विरजं विशुद्धमित्यादि" हृत्पुण्डरीकं यदस्ति तस्य मध्ये इत्येवमध्याहारेण योजनीयम् 'विरजं' रागद्वेषादिरजोविकारशून्यं 'विशुद्धं' यास्कमहर्षिणा निरुक्तकारेण जायते ऽस्ति वर्धते विपरिणमते ऽपक्षीयते नश्यतीति सूत्रेण दर्शितैः षड्भिर्भौतिकविकारैर्हीनम् 'विचिन्त्य'- ध्यात्वा मध्ये अर्थात् पुण्डरीकस्य 'विशदं' निर्मलज्योतिस्वरूपं 'विशोकं' नाशादिशङ्काविरहेण स्वात्मारामतयेष्टवियोगाद्यभावे न च चिन्ताशून्यम् 'अचिन्त्यं' कियत्परिमाणकमिदं वस्त्वस्तीत्येवं चिन्ताया अविषयीभूतम् कुत इत्याह। 'व्यक्तं' जीवानामज्ञानावृतचित्ततया ऽप्रकाशम्। 'तमेतं' ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा ऽनाशकेनेति श्रुतेः, निष्कामयज्ञाद्यनुष्ठानक्षपितकल्मषैतरज्ञानाविषयीभूतमित्यर्थः। 'अनन्तरूपं' कालकृतोऽन्तोनाशः देशकृतोऽन्तः सर्ववस्त्वव्यापकत्वम् एतदुभयविधान्तरहितं रूपं यस्य तथाभूतम् 'शिवं' कल्याणस्वरूपं शेते सर्वस्मिन्निति व्युत्पत्त्या सर्वाधारभूतं वा॥ प्रशान्तं निर्वातदीपशिखावदेकाकारम् 'अमृतं' नित्यं 'ब्रह्मयोनिं' 'ब्रह्मणः' वेदस्य विरिञ्चेश्च योनिं कारणं

'तत्' प्रसिद्धम् 'आदिमध्यान्तविहीनम्' आदिरुत्पत्तिः मध्यं वृद्धाद्यवस्था अन्तः ध्वंसः एतत्त्रितयरहितम् 'एकं' सजातीयद्वितीयरहितं 'विभुं' व्यापकं 'चिदानन्दं' अत्र नपुंसकनिर्देशेनार्श आद्यजन्ततया नित्यज्ञानसुखयोराश्रयमित्यर्थः। 'अरूपम्' अनवयवम् 'अद्भुतम्' अणिमादिभिर्लोकेऽदृश्यमानैरैश्वर्यैराश्चर्यमयम् 'उमासहायम्' अत्रोमापदमुकारमकाराकारैः प्रणवघटकैरेव वर्णैर्ब्रह्मविष्णुरुद्रवाचकैः शक्तिप्रधानत्वेन स्त्रीत्वविवक्षायां टाप् प्रत्ययं कृत्वा साधनीयम् तेन मूर्त्तित्रयेण जगज्जन्मस्थितिप्रलयकारणीभूता शक्तिः पार्वतीरूपेण परमशिवस्य वामाङ्कस्थोमापदेनोच्यते सा सहायाऽयोगव्यवच्छेदेन सह अयते वर्त्तमाना येन तं परमेश्वरम् ईश्वराणामीश्वरं स्वेतरपुरुनिष्ठेश्वरत्वानिरूपकमित्यर्थः 'प्रभुं' 'समर्थं' 'त्रिलोचनं' सूर्यशशाङ्कवह्निनेत्रम् 'नीलकण्ठं' ब्रह्माण्डानुग्रहपारवश्येन निपीतहालाहलजनितश्यामच्छविकण्ठम् भक्तवात्सल्येन कण्ठासज्जितविष्णुच्छायं वा 'प्रशान्तं' विक्षेपशून्यम् कैवल्योपनिषद्वाक्येनोपक्रमोपसंहारमध्यपरामर्शशिवैकान्तिकाथर्वशिरोवचनेन कठवल्लीमन्त्रेण छान्दोग्यवाक्येनैतत्तृतीयान्तार्थचतुष्टयस्य दहरोपासनोपास्यत्वविधानेनेत्यत्रत्यविधानक्रियायामन्वयः तदेकवाक्यतापन्नेत्यस्य छान्दो-

गयवाक्येनाभेदेनान्वयः विधानेनेति तृतीयार्थहेतुत्वस्य चानियतविषयकत्वापत्तावन्वयः 'बालाग्रमात्रमिति' "परिमाणेद्वयसज्दघ्नञ्मात्रच" इति सूत्रेण मात्रचि बालाग्रपरिमाणं बालस्य केशस्य अग्रमिव सूक्ष्ममित्यर्थः 'विश्वदेवं' सकलदेवस्वरूपं 'जातवेदं' जाताः उत्पन्नाः वेदाः यस्मात्तं जातं सर्वं वस्तु वेत्ति विन्दते वा यः तं वा 'वरेण्यं' वरणीयम् श्रेष्ठमिति यावत् उपक्रमोपसंहारमध्यपरामर्शेशिवैकान्तिकाथर्वशिरोवचनेनेति" उपक्रमः प्रारम्भः उपसंहारः समाप्तिग्रन्थः मध्यः ग्रन्थस्य मध्यभागः एषां त्रयाणां परामर्शेन विचारेण परस्परैकवाक्यतया तात्पर्यपर्यालोचनेन शिवैकान्तिकं शिवमात्रतात्पर्यकत्वेन निर्णीतम् यदथर्वशिरोवचनं तेन शिवस्यैव दहरोपासनोपास्यत्वं सिद्ध्यतीतिभावः।

अंगुष्ठमात्रः पुरुषोज्योतिरिवाधूमकः ईशानोभूतभव्यस्येति।

'अङ्गुष्ठमात्रः' अङ्गुष्ठपरिमितः अङ्गुष्ठपदेन सूक्ष्मतां लक्षयित्वा तेन रूपेण हृत्पुण्डरीकान्तर्वर्त्तिमहेश्वरएवोच्यते पुरुषः पुंस्त्ववान् तेन नपुंसकत्वस्त्रीत्वव्यावृत्तिः यद्वा पृषोदरादित्वेन पुरि शेते इति व्युत्पत्या अन्तर्यामी पुरुषपदार्थः 'ज्योतिरिवाधू-

मकः' ज्योतिष्पदेन प्रज्वलद्वह्निरुच्यते अत एवाधूमकइति विशेषणं सङ्गच्छते संयोगोविप्रयोगश्चेत्यादिना काव्यप्रकाशे संसर्गवद् विप्रयोगस्यापि अशंखचक्रो हरिरित्यादौ विशेषावगतिहेतुत्वोक्तेः तथा च धूमरहितप्रज्वलद्वह्निरिव निर्मलप्रकाशस्वरूपइत्यर्थः, 'ईशानोभूतभव्यस्येति' अत्र भव्यपदेन वर्त्तमानं भविष्यच्चोच्यते ततश्च भूतभविष्यद्वर्त्तमानकालभवानां वस्तूनां स्वामीत्यर्थः ।

## कठवल्लीमन्त्रेण च छागपशुन्यायेन ।

छागपशुन्यायेनेति अयमाशयः अग्निषोमीयं पशुमालभेतेति पश्वालम्भविधौ पशुपदेन पशुसामान्यस्यैवोपादानात् 'पशुचोदनायामनियमोऽविशेषादिति' पूर्वपक्षसूत्रेण पशुसामान्यस्य प्राप्तिमुपन्यस्य 'छागोवा मन्त्रवर्णादिति' सिद्धान्तसूत्रेण छागस्य "हविषो वपाया मेदस" इति मन्त्रे छागरूपपशुविशेषस्य श्रुतत्वात् पश्वालम्भनविधौ सामान्यरूपेण पशोरुपादानेपि मन्त्रविध्योरेकवाक्यत्वानुरोधेन छागएव पशुर्गृह्यते इति व्यवस्थापितम् तन्न्यायेना "थ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्मेत्या" दिछान्दोग्य, वाक्ये यत्तच्छब्दाभ्यामुपास्य

स्वरूपस्य विशेषरूपेणाप्रतीतावपि तैत्तिरीयवाक्ये हृत्पुण्डरीकान्तरवर्त्युपासनाबोधके "यः परः स महेश्वर" इति महेश्वरपदेन हृत्पुण्डरीकं विरजं विशुद्धमिति कैवल्योपनिषद्वाक्ये शिवमुमासहायं परमेश्वरं त्रिलोचनं नीलकण्ठमिति पञ्चभिः पदैः वालाग्रमात्रमित्यथर्वशिरोवाक्ये रुद्रात्मकाग्निरूढजातवेदपदेनाङ्गुष्ठमात्र इति कठवल्लीमन्त्रे ईशानपदेन विशिष्य शिवस्यैवोमापतेर्हृदयमध्ये उपास्यत्वबोधनात्तत्तसृणामुपनिषदामनुरोधेन भगवदुमापतेरेव दहरोपासनोपास्यत्वं दृढं भवतीति निष्पक्षपातदृष्ट्या द्रष्टव्यमितिनारायणस्यास्मिन्प्रकरण-उल्लेखप्रयोजनन्त्वनुपदमेव स्फुटीभविष्यति ।

तदेकवाक्यतापन्नेन अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम् ।

"अथ यदिदमिति" पूर्वोक्तविद्योपदेशानन्तरं दहरविद्योपदिश्यत इति शेषः । यदिदं यत्, इदं, सन्निहितं ब्रह्मपुरम् आत्मस्थानं शरीरं वेश्म गृहं दहरोऽस्मिन्नन्तराकाश इति, दहरः सूक्ष्मः पापदहनक्षमो वा अस्मिन् हृदयपुण्डरीके अन्तराकाशः

अन्तः मध्ये आकाशवदपरिच्छिन्नं ब्रह्म अस्तीति-शेषः । तैत्तिरीयकव्याख्याने सायणोक्त्यनुसारेणात्रापि एवं सतीति शेषः करणीयः ततश्च तस्मिन् यदन्तरित्यत्रतत्पदेन पुनरपि हृत्पुण्डरीकमेव गृह्यते यत्पदेन च आकाशपदाभिहितं ब्रह्मैव ग्राह्यम् ततश्च तस्मिन् पुण्डरीके यद् अन्तः अन्तर्गतम् अन्तर्यामिस्वरूपं सदाशिवतत्त्वं तदन्वेष्टव्यमित्यर्थः अन्वेषणमेव विवृणोति ।

## तद्वावजिज्ञासितव्यमिति ।

"तद्वा व जिज्ञासितव्यमिति, ज्ञातुमेष्टव्यम् विचारेण निर्णेतव्यमित्याशयः उपासनायाः स्वरूपनिर्णयपूर्वकत्वात् हृत्पुण्डरीकेपारमेश्वरतत्वंनिश्चित्योपासितव्यमितितात्पर्य्यम् ।

## छान्दोग्यवाक्येन च ।

"छान्दोग्यवाक्येन चेति" यद्यपि छान्दोग्यवाक्ये शिवासाधारणं किञ्चित्पदं नास्ति तथापि देवतान्तररूढपदस्याप्यभावे हृत्पुण्डरीकान्तर्गतोपासनाविषयककैवल्योपनिषदादिगतशिवासाधारणोमासहायत्रिलोचननीलकण्ठादिपदैर्हृत्पुण्डरीकेशिवस्यैवोपास्यत्वनिर्णयेनतदेकवाक्यतया तस्मिन् यदन्तस्तदन्वेष्टव्यमिति छान्दोग्यवाक्यगतयत्तच्छब्दाभ्यां शिवस्यैव ग्रहीतुमौचित्यमित्यनुपदोक्तमत्रानुसन्धेयम्

शिवस्य दहरोपासनोपास्यत्वविधानेनात्रदेवतान्तरविधानेऽनियतविषयकत्वापत्तेः।

"अनियतविषयकत्वापत्तेरिति" ननुशालग्रामेजलादौचैकस्मिन्नेवस्थानेऽनेकदेवानांपूजादिदर्शनेनप्रतीकैक्येप्युपासनाभेदेनानियतविषयकत्वं नदोष इतिचेन्नैवम्तत्रतत्तद्देवतैकान्तिकभिन्नभिन्नपदैरुपासनाभेदस्यनिर्णीतत्वेनानियतविषयकत्वस्यादोषत्वेपि नियतविषयकैकोपासनाया उपपत्तिसंभवेऽनियतविषयकत्वपक्षस्यहेयत्वावश्यम्भावात् जलादिप्रतीकेभिन्नानामेववाक्यानांतत्तदुपासनाबोधकत्वेनसन्दिग्धार्थकत्वाभावान्निष्प्रत्यूहप्रवृत्तिप्रयोजकत्वोपपत्त्या तथोपगमेपिप्रकृते तैत्तिरीयकवाक्यस्यैकस्यैवोपास्यद्वयांशाकृष्यमाणत्वेसन्दिग्धार्थकतया प्रवर्त्तकत्वमेवोच्छिद्येतेतिनानियतविषयकत्वं स्वीकर्त्तुंशक्यम् अनुवाकत्रयस्यैकोपासनाविषयकत्वाऽभिप्रायेणाऽयन्दोषोबोध्यः। एतावता प्रबन्धेनशिवस्यैवदहरोपासनाविषयत्वमित्युपपाद्य तत्प्रकरणपठितनारायणपदसङ्गतिमुपपादयति। किञ्चेत्यादिना।

किं चोपासनाविधिस्थले उपा-

स्योपासनोपासकानां त्रयाणामपि वि-
धेयत्वेनोपासकाकाङ्क्षायाम् ।

"उपासकाकाङ्क्षयामिति" उपासनायाउपास्योपासकोभयसंबन्धित्वनियमेनोपनिषदन्तरैकवाक्यतयोपास्यस्वरूपनिर्णये जाते परिशेषात् नारायणपदमुपासकस्वरूपसमर्पकमेव मन्तुमुचितमिति तद्ग्रन्थकृत् तात्पर्यम् अत्रैव हेत्वन्तरमपि क्रोड़ीकरोति ।

नारायणं महाज्ञेयमित्याद्यभिधाय पद्मकोशप्रतीकाशमिति दहरपुण्डरीकप्रदर्शनेन अपरिमाणोशिष्यस्येत्यपरिमिताधिकरणन्यायेनसन्निधिश्रुतनारायणपरित्यागेनान्यनिरीक्षणायोगात्तस्यैवदहरपुण्डरीकप्रतियोगित्वापत्यास्वीयहृदयेस्वस्योपास्यत्वायोगाच्चशिवस्यैवनारायणहृद्युपास्यत्वंसिध्यति ।

"अपरिमाणोशिष्यस्येत्यादिना" आधाने श्रूयते एका देया षड्देया द्वादश देया चतुर्विंशतिर्देया शतं देयं सहस्रं देयमपरिमितं देयमिति तत्रापरिमितपदे सन्देहः किमपरिमितपदेन सन्निहितानामेकत्वादिस-

ख्यानां प्रतिषेधः क्रियते आहोस्वित् परिमाणसामान्यस्येति तत्रेदं पूर्वपक्षसूत्रम् अपरिमिते शिष्टस्य संख्या प्रतिषेधस्तच्छ्रुतित्वादिति । अयमर्थः अपरिमितपदे शिष्टस्यैकत्वत्वादिनाविहितस्यैकत्वादिसंख्यारूपपरिमाणस्य प्रतिषेध उच्यतेकुत इत्याह तच्छ्रुतित्वादिति तस्याएकत्वादिसंख्यायाः श्रुतित्वात्कर्मणिक्तिना श्रूयमाणत्वादित्यर्थः प्रत्यासन्नत्वादिति—यावत् एवमेवप्रकृते"पद्मकोशप्रतीकाशमिति" उपास्याधिकरणेहृदयेवर्ण्यमानेकस्यहृदयमितिप्रतियोगयपेक्षायां नारायणं महाज्ञेयमिति नारायणस्य प्रत्यासन्नत्वात् तत्संबन्ध्येव ग्राह्यमिति भावः यद्यपीदं पूर्वपक्षसूत्रम् "अनियमोवा" इत्याद्युत्तरसूत्रद्वयेनापरिगणितत्वस्यैव सिद्धान्तितत्वात् तथापि तत्रैकादेया इत्यादिवाक्यमर्यादामाहात्म्यादपरिमितपदजन्यस्वारसिकप्रत्ययबलाच्चप्रत्यासत्तिन्यायबाधेपितादृशत्र लवद्विरोधिप्रमाणाभावस्यात्रेप्रकृतपूर्वपक्षन्त्रूचितप्रत्यासत्तिन्यायेननारायणस्यहृत्पुण्डरीकप्रतियोगित्वनिर्णये न किञ्चिद्बाधकमिति भावः। वस्तुतस्त्विदमभ्युच्चयमात्रं हृदयप्रतियोगित्वेनोपासकमात्रस्यैवग्रहीतुमैाचित्यान्नारायणपदोत्थितशङ्कासमाधानन्तु पूर्वोक्तं नरा अयनमस्येति व्युत्पत्या "प्रज्ञाद्यणि" नराणां समूहोऽयनमस्येति व्युत्पत्या वा आपोनारा इति

प्रोक्ता आपोवै नरसूनवः । तायदस्यायनं प्रोक्तंतेन-नारायणः स्मृत । इति मनुस्मृत्युक्तदिशा नारा अय-नमस्येति व्युत्पत्या वा यौगिकत्वमाश्रित्य शिवभग-वत्परत्वमेव प्रकृतेनारायणपदस्य वक्तुं शक्यमित्ये-वोचितम् वैपरीत्यन्तु वक्तुमशक्यं नीलकण्ठं त्रिलो-चनसुमासहायमित्यादिबहूनांपदानां रूढ्यर्थपरित्या-गेनान्यार्थकत्वक्लिष्टकल्पनापेक्षया एकस्मिन्नारायण-पद एव तथा कल्पनौचित्यात् ।

न च वेदान्तविज्ञान सुनिश्चिता-र्था । इत्येतद्वाक्यश्रवणेनयतीनामेव हृदयपुण्डरीकप्रतियोगित्वेनान्वयः किं नस्यादितिवाच्यंदर्शपूर्णमासप्रकरण-पठितसमिधो यजतीति वाक्यविहित-प्रयाजानांदर्शपूर्णमासाङ्गत्ववन्नाराय-णप्रकरणपठितहृदयस्यनारायणसम्ब-न्धित्वावश्यंभावात् ।

" न च वेदान्तविज्ञानसुनिश्चितार्था इति " वेदान्तविज्ञानसुनिश्चितार्थाःसन्यास योगाद्यतयः शु-द्धसत्वास्तेब्रह्मलोकेतुपरान्तकालेपरामृतात्परिमुच्य-न्तिसर्वे " इतिदहरवाक्यादव्यवहितपूर्वमेव पठितम-

स्ति, "यतीनामिति" तेषां विद्यात्वत्वेनोपासकत्वयो-ग्यतयातत्सम्बन्ध्ये ब्रह्म इयंग्रा ह्यमिति प्रश्नकर्त्तुराशयः । समिधोयजति इडोयजति बर्हिर्यजति तनूनपातं यजति स्वाहाकारं यजतीतिपञ्चवाक्यविहितप्रयाजानां दर्शपूर्णमासाङ्गत्ववत् प्रकरणबलेन नारायणप्रकरण-पठितहृदयस्यनारायणसम्बन्धित्वंस्वीकर्त्तव्यमित्युक्त-राशयः । नारायणेन स्वहृदयपुण्डरीकेलिङ्गस्वरूपः सदाशिवउपास्यतइत्यर्थंवामनपुराणेनभगवद्गीता-वाक्याच्चसाधयति ।

अपि च-ततोव्ययात्मासहरिः स्व-हृत्पङ्कजशायिनम् । दर्शयामास देवा-नांसुरारिर्लिङ्गमैश्वरमितिवामनपुरा-णवचनेननारायणस्यहृदयान्तर्वर्त्ति-प्राणलिङ्गोपासनाप्रदर्शनेनभगवद्गी-तासुतमेवचाद्यंपुरुषंप्रपद्येयतः प्रवृ-त्तिः प्रसृतापुराणीतिकृष्णेनस्वप्रपद-नीयपुरुषंप्रदर्श्यकोसावित्युक्ते उत्तमः-पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । योलोकत्रयमाविश्यबिभर्त्यव्ययईश्व-

रः। ईश्वरः सर्वभूतानां हृद्देशे ऽर्जुन-तिष्ठतीति स्वोपास्यपुरुषस्य हृदयान्त-र्वर्तिनःशिवैकान्तिकेश्वरपदेननिर्णय-करणेनचदहरोपासनाधिकरणहृदय-संबन्धितायानारायणस्यावश्याभ्युपेय-त्वात् ।

"ततोऽव्ययात्मेत्यादिना" यद्यपिगीताया-मुत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतइत्युक्त्वा "य स्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः अतोऽस्मि-ल्लोके वेदे च प्रथितः पुरुषोत्तम" इति वाक्येन स्व-स्यैवोत्तमपुरुषत्वमुक्तम् तथापि श्रीकृष्णविग्रहान्त-र्यामिणः परमेश्वरस्यैव तदुक्तित्वेन न कश्चिद्विरोधः ।

अथैवमुक्तप्रणाल्या परमशिवस्य दहरोपासनोपास्यत्वसिद्धावपितन्त्र-त्यस्यलिङ्गरूपत्वेप्रमाणाभावान्नान्त-र्लिङ्गधारणसिद्धिरितिचेन्मैवम् ।

"लिङ्गरूपत्वेप्रमाणाभावादिति" गीताया-मितिशेषः । वामनपुराणेतत्प्रमाणस्यदर्शितत्वात् ।

हंसोपनिषदाद्यागमेषूदाहृतवामनपुराणेपि तस्यतद्रूपत्वावसायात्।

'हंसोपनिषदिति,' माभूद्गीतायाम् लिङ्गरूपत्वे प्रमाणं तथापि प्रमाणान्तरसद्भावे सप्रमाणकत्वेन' किंचिद्धीयत इत्याशयः। हृत्पुण्डरीकान्तर्वर्त्तिनः परमेश्वरतत्त्वस्य लिङ्गरूपत्वे वामनपुराणं प्रमाणत्वेनोपन्यस्य हंसोपनिषद्वाक्यमप्युपन्यस्यति।

तथाहि एषोऽसौ परमोहंसो भानुकोटिप्रतीकाशो येनेदं व्याप्तम्।

"एषोऽसावितिति" परमोहंस इति स्वरूपतः स्वच्छनीरक्षीरविवेककर्त्तृहंसप्रतियोगिकविवेकनिर्मलत्वसाधर्म्यादात्मविदिहंसत्वपरमहंसत्वव्यवहारं शास्त्रकाराः कुर्वन्ति।

तस्याष्टधा वृत्तिर्भवति पूर्वदले पुण्यवृत्तिः। आग्नेये निद्रालस्यादयोभवन्ति। याम्ये क्रौर्यमतिः। नैर्ऋते पापे मनीषा। वारुण्यां क्रीडा। वायव्ये गमनादौ बुद्धिः। सौम्ये रतिप्रीतिः। ऐशान्ये द्रव्यादानं। मध्ये वैराग्यं। केसरे जाग्रद-

वस्था। कर्णिकायां स्वप्नः। लिङ्गे सुषुप्तिः। पद्मत्यागे तुरीयं यदा हंसो नादे विलीनो भवति तदा तत्तुरीयातीतमपि। अत्र लिङ्गे सुषुप्तिरिति हृदयान्तर्वर्तिनः शिवस्य लिङ्गरूपत्वं स्पष्टम्।

"तस्याष्टधा वृत्तिरिति" हृदयपुण्डरीकस्य द्वादशभागाः कल्प्यन्ते "अष्टसु दिक्षु अष्टदलानि मध्यकेसरकर्णिकालिङ्गरूपाश्चत्वारो भागाः दलमध्ये कल्प्यन्ते एतेष्वात्मनः तत्तदंशाभिमानित्वेन तत्तद्वृत्तिस्तत्तदवस्था च भवतीत्यत्रोच्यते। पूर्वदले पुण्यमतिरित्यादिना, पूर्वदले अभिमानलक्षणसम्बन्धे पुण्यमतिः पुण्यकरणेच्छा भवतीत्येवंरूपेणाग्रिममपि व्याख्येयम्। अत्रात्मगतत्रयोदशभागप्रदर्शनेपि तस्याष्टधाभवतीत्यष्टत्वोक्तिस्तु जाग्रत्स्वप्नसुषुप्तितुरीयातीतत्वावस्थानां वृत्तित्वव्यवहाराभावमात्रेण बोध्या "शिवस्य लिङ्गरूपत्वमिति," अन्यथा पद्ममध्ये मध्यकेसरकर्णिकातिरेकेण चतुर्थस्य कस्यचिदभावाल्लिङ्गे सुषुप्तिरिति निर्विषयंस्यादिति भावः।

आगमवाक्यानि तु आधारे कनकप्रख्यं।

हृदये विद्रुमप्रभं भ्रूमध्ये स्फटिकच्छायं लिंगं योगीविभावयेत् ॥ इत्यादिसिद्धांतशिखामरायादिवचनान्यनुसंधेयानीति। अथास्यामुपनिषदि दहरोपासनाविषये नारायणस्योपासकत्वंशिवस्योपास्यत्वमितिनिर्णयेन सहस्रशीर्षमित्यनुवाकगतनारायणपरं ब्रह्म तत्त्वं नारायणः पर इत्यादिवाक्यानि विरुध्येरन्निति तु माशंकिष्ठाः तद्भावभावनापन्नस्य नारायणस्यानितरसाधारणहृदयान्तर्वर्तिज्योतिर्लिंगानुसंधानसामर्थ्यलिंगेन तथास्तुतिरिति योजयितुं शक्यत्वात् ॥

"आधारे कनकप्रख्यमिति" आधारे बाह्यपूजावस्थाने नाभिचक्रे वा विद्रुमप्रभं प्रवालच्छायम् "अनितरसाधारणेति" इतरोपासकापेक्षया नारायणे शिवलिङ्गानुसन्धानस्यात्यन्तोत्कर्षशालित्वेन शिवभावापत्या तस्यापि परब्रह्मत्वोक्तिरित्याशयः ।

केचित्तुनारायणपरं ब्रह्मेत्यस्य नारायणात्परं ब्रह्मेत्यर्थः । अत एव नारायणः परं ब्रह्मेत्यनुक्त्वा नारायणपरं ब्रह्मेत्येवाभिहितम् । तथाचोक्तरीत्या तत्परत्वं शिवस्यैवेति नकश्चिद्विरोध इति प्राहुरित्यलमतिविस्तरेण ।

"केचित्त्विति" एतन्मते नारायणपरमित्यत्र पञ्चमीसमासो मन्तव्यः ।

एवमस्यामुपनिषदि ज्योतिर्लिङ्गानुसंधानरूपान्तर्लिङ्गधारणं विधाय इष्टलिङ्गरूपबाह्यलिङ्गधारणमपि विधीयते "सर्वलिंगꣳस्थापयतीति"।

सर्वलिङ्गꣳस्थापयतीति "निधनपतये नमः निधनपतान्तिकाय नमः । ऊर्द्ध्वाय नमः ऊर्द्ध्वलिङ्गा नमः । हिरण्याय नमः हिरण्यलिङ्गाय नमः । सुवर्णाय नमः । सुवर्णलिङ्गाय नमः । दिव्याय नमः दिव्यलिङ्गाय नमः । भवाय नमः

भवलिङ्गाय नमः । शर्वाय नमः शर्वलिङ्गाय नमः । शिवाय नमः शिवलिङ्गाय नमः। ज्वलाय नमः ज्वललिङ्गायनमः । आत्मने नमः आत्मलिङ्गाय नमः । परमाय नमः परमलिङ्गाय नमः । एतत् सोमस्यसूर्यस्यसर्वलिङ्गंस्थापयतिपाणिमन्त्रं पवित्र-मिति" तैत्तिरीयके षोडशानुवाके पठ्यते एषां च मन्त्राणां सायणाचार्यकृतव्याख्यानस्यानुपलम्भात् क्व एषां नियोगोस्तीति स्पष्टं वक्तुं न शक्यते तथापि मन्त्रलिङ्गपर्यालोचनेन नमोन्तानामीश्वरप्रणामे अ-ङ्गत्वप्राप्तावैन्द्र्यागार्हपत्यमुपतिष्ठत इति प्रत्यक्ष-श्रुतिविहितगार्हपत्योपस्थानाङ्गत्वेन लिङ्गप्राप्तैन्द्र्यो-पस्थानाङ्गत्वबाधवत् एतत्सोमस्य सूर्यस्येति वाक्यशे-षश्रुतौ पूर्वमन्त्रसमुदायपरामर्शकेनैतत्पदेन लुप्ततृ-तीयान्तेन सूर्यमण्डलान्तर्वर्त्तिनः सोमस्य उमासहि-तस्य सर्वस्य सर्वविधस्य सौवर्णमणिमयनार्मदादेर्लि-ङ्गस्यस्थापने विनियोगलाभात् लिङ्गप्राप्तप्रणामाङ्गत्वं बाध्यत इति प्रतीयते ॥

नन्वत्रस्थापयतीति लडन्तत्वेन लिङाद्यभावान्नविधिसंभवः । न च व्रीहीन्प्रोक्षति व्रीहीनवहन्तीत्यत्र लि-

ङाद्यभावेपिविधिप्रयोजकरूपसत्त्वेन यथा विधिसम्भवस्तद्वदत्र किं नस्यादितिवाच्यम् ।

लिङाद्यभावादिति । लिङ्लोडादीनामेव विधेयताबोधकत्वादिति भावः विधिप्रयोजकरूपसत्त्वेनेति अप्राप्तत्वमेव तद्रूपम् ।

अत्रविधिप्रयोजकरूपाभावात् । तथाहि, विधिरत्यन्तमप्राप्तेनियमः पाक्षिकेसति। तत्रचान्यत्र च प्राप्तौ परिसंख्येतिगीयते, इति कारिकयेदमवगम्यतेयत्रप्रमाणान्तराप्राप्तस्यानेनैव विधिस्तत्रापूर्वविधिः यथा व्रीहीन्प्रोक्षतीत्यत्र यत्र प्रकृतकार्ये उभयोः पक्षतः प्राप्तावनेनैव कर्तव्यं नतेनेति विधीयते तत्र नियमविधिःयथा व्रीहीनवहन्तीत्यत्रतत्रचान्यत्रचेति समुच्चयप्राप्तौयत्रविधीयते सा परिसंख्या यथा पञ्च पञ्चनखा भक्ष्या इ-

त्यत्र "श्वाविक्छल्यकोगोधाखड्गी कूर्मस्तुपञ्चमइतिवचनेनैषामन्येषाञ्चपञ्चनखानांभक्षणप्राप्तौ एतेपञ्चैव पञ्चनखा भक्ष्या नेतरे इति परिसंख्याविधिरिति ।

अत्यन्तमप्राप्त इति । यथा व्रीहीन्प्रोक्षतीति । पाक्षिकेसतीति यथा व्रीहीनवहन्तीति अत्र तुषविमोकसाधनत्वेननखदलनयोरिवावघातस्यापिपक्षे प्राप्तेः तत्रचान्यत्र चेतियथापञ्चपञ्चनखाभक्ष्या इत्यत्र तेषां विधिप्रकाराणां मध्ये कस्यापिप्रकृते प्राप्तिर्नास्तीत्युपपादयतिप्रकृते सर्वलिङ्गमिति ।

प्रकृतेसर्वलिङ्गं स्थापयतीत्यत्र नापूर्वविधिः लिङ्गधारणस्य सर्वाननशिरोग्रीव इति श्वेताश्वतरोपनिषद्वाक्यप्राप्तत्वेन प्रमाणान्तराप्राप्त्यभावात् । "सर्वाननशिरोग्रीवस्सर्वभूतगुहाशयः । सर्वव्यापी च भगवांस्तस्मात्सर्वगतश्शिवइति अस्यायमर्थः सर्वेषां, लिङ्गधारणयोग्यानां" आननशिरो-

ग्रीवाः, अधिकरणं यस्य सः सर्वानन-शिरोग्रीवः धार्यमाणस्सन् तत्रेष्टलिङ्ग-रूपेणास्थितश्शिवइत्यर्थः सर्वभूतगुहा-शयइत्यस्यसर्वभूतानांगुहायां दहरपु-ण्डरीके शेते लिङ्गेसुषुम्निरिति पूर्वा-दाहृतहंसोपनिषत्प्रामलिङ्गरूपश्शि-वोन्तर्लिङ्गरूपेण स्थितइत्यर्थः । सर्व-व्यापीतित्रिविधपरिच्छेदरहितः अत-एव सर्वगत इति ।

श्वेताश्वतरोपनिषद्वाक्यप्रामत्वेनेति यद्य-प्येकस्यैवसन्ध्यातर्पणादिधर्मस्यानेकासुस्मृतिष्वेकस्यै-वाग्निहोत्रधर्मस्यानेकासुशाखासुविधिर्दृश्यतेकस्यापि स्मृत्यन्तरशाखान्तरबोधितार्थबोधकत्वेन विधित्वं न व्याहन्यते सर्वेषामेव वाक्यानां पृथक् पृथक् तत्तत्स्मृतितत्तच्छाखाध्येतारं प्रत्यज्ञातज्ञापकत्वेन-विधित्वोपगमात् एवं श्वेताश्वतरोपनिषद्वाक्येन "सर्वलिङ्गं स्थापयतीत्यस्य विधित्वव्याघातश्रा-शङ्कितुं न शक्यते तथापि सामान्यविशेषभावा पन्नार्थबोधकत्वेन परस्परापेक्षितार्थकत्वमेव व्यव-

स्थापयितुं विधित्वव्याघातशङ्कोत्थापनमिति मन्तव्यम्। आननशिरोग्रीवम् अधिकरणं यस्येति।

प्राण्यङ्गत्वादेकवद्भावः सर्वाननशिरोग्रीवम् अधिकरणत्वेनाऽस्ति यस्येति मत्वर्थीयाच्प्रत्ययान्तत्वाभिप्रायेणेदं व्याख्यानं बोध्यम् बहुव्रीहिसमासत्वं न्तु न भ्रमितव्यमधिकरणपदस्याभावात्उत्तरपदलोपस्य च शाकपार्थिवादितत्पुरुषेप्रादिभ्योधातुजस्य वा केवलं विधानात् हंसोपनिषत्प्राप्तेति। तद्वाधितेत्यर्थः। त्रिविधपरिच्छेदरहितेति।

परिच्छेदस्य तिस्रोविधाः कालपरिच्छेदोदेशपरिच्छेदोवस्तुपरिच्छेदश्चेति कालपरिच्छेदो यथा "शतायुर्वैपुरुष" इति। देशपरिच्छेदः "शतयोजनविस्तीर्णोमकरालय" इति। वस्तुपरिच्छेदो यथा इदं पार्थिवमिदं जलीयमिति एतैस्त्रिविधपरिच्छेदै रहितः एतावत्कालवृत्तिः एतावद्देशवृत्तिः एतद्वस्तुमात्रस्वरूपः एवं रूपेण यो वक्तुं न शक्यते अर्थात्सार्वकालिकसर्वदेशवृत्तिसर्ववस्त्वात्मकःशिवइत्यर्थः। अथ मत्रनिष्कर्षः प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वं कालपरिच्छेदशून्यत्वम्। अत्यन्ताभावाप्रतियोगित्वं देशपरिच्छेदशून्यत्वम्। भेदाप्रतियोगित्वं वस्तुपरिच्छेदरहितत्वमिति

सर्वाननशिरोग्रीव इत्यत्राशंश्राद्यजन्तत्वाद्राजानानश्राधाराधेयभावसम्बन्धेन शिवपदार्थेऽन्वयादुक्तार्थलाभाभिप्रायं मन्यमानः शङ्कते

नन्वत्र सर्वाननशिरोग्रीव इत्यस्य स्वविशेष्यभूतशिवपदेन समानविभक्तिकत्वात्तस्यचाभेदबोधनियामकत्वेन कथंभेदगर्भीकृताधिकरणताप्रतीतिरिति चेन्मैवं मंस्थाः समानविभक्तिकयोरपि अधिकरणताप्रत्यायकत्वस्य आनन्दमयोऽभ्यासादित्यधिकरणे नीलकण्ठाचार्यचरणैरङ्गीकृतत्वात् तत्र च मयटः प्राचुर्यार्थकत्वस्वीकारेण आनन्दब्रह्मणोर्धर्मधर्मिभावप्राप्तौ आनन्दोब्रह्मेतिव्यजानात् नित्यं विज्ञानमानन्दंब्रह्मेत्यादि वाक्यगतानन्द ब्रह्मपदयोरेकविभक्तिकत्वेनाभेदबोधनात् कथं धर्मधर्मिभाव इति पूर्वपक्षं प्रापय्य "आनन्दोब्रह्मणोरूपमित्यादिभेदबोधकवाक्याविरोधेन आनन्दाधि'-करणं ब्रह्मेति राद्धान्तितम् ।

नन्वत्रेति । कथमिति प्रथमान्तपदयोरभेदातिरिक्तसम्बन्धेनान्वयबोधजनकताया अव्युत्पन्नत्वादिति भावः भेदगर्भीकृत इति ।

स्वस्मिन् स्वनिरूपिताधेयताया बाधितत्वात् अधिकरणाधेययोर्भेदस्य नियमेनापेक्षकत्वमेवाधिकरणतायाभेदगर्भितत्वं बोध्यम् । भ्रान्तस्यप्रश्नकर्तुर्ज्ञानानुसारेणैवोत्तरमाह मैवंमंस्था इत्यादिना ।

वस्तुतस्तु सर्वाननशिरोग्रीवइत्यस्यार्शआद्यजन्ततयाऽभेदसम्बन्धेनाऽन्वयस्यैव स्वीकारात् स्वमते आधाराधेयभावसम्बन्धेनान्वयएवनास्तीति नास्त्येवानयोःशङ्कासमाधानयोरवसरः । अच्प्रत्ययश्चषष्ठ्यर्थ कार्यः आधेयतासम्बन्धस्य वृत्यनियामकत्वात् नीलकण्ठाचार्यचरणैरिति ।

अयं भावः विशिष्टाद्वैतसिद्धान्ते आनन्दमय आनन्दोब्रह्मणोरूपमित्यादौ मयट् षष्ठ्यादिदर्शनेनानन्दब्रह्मणोर्भेदस्यैवोपगमेनानन्दोब्रह्मेतिव्यजानादित्यत्रसमानविभक्तिकविशेष्यविशेषणवाचकपदसमभिव्याहारस्थलेपि क्वचिद्भेदः प्रतीयत इत्युपगन्तव्यं भवति यद्यपि प्रकृतेप्यानन्दपदस्यार्शआद्यजन्तत्वस्य स्वीकारेण स्वाश्रये लक्षणाया एवोपगमेन वाऽभेदसम्बन्धेनान्वयेपि नास्तिबाधः तथापि च्छन्दसि व्यत्ययोबहुलमिति शास्त्रेण सप्तम्यर्थेपि प्रथमायाः विधानेनाऽनायासत एवसमानविभक्तिकस्थलेप्याधाराधेय-

भावोलभ्यतइति किमर्थमर्शआद्यजन्तताऽऽश्रये लक्षणा वा स्वीकरणीयेत्याशयेननीलकण्ठाचार्यैरेवमुक्तम्। वस्तुतस्तु नीलोघटइत्यादिलोकसाधारणेनोपायेनोपपत्तौ छान्दसत्वेन व्यत्ययकल्पनयाऽसमाधानस्यान्याय्यतयातत्र च गुणवचनेभ्योमतुपोलुगिष्ठ इति महाभाष्योक्तप्रक्रियया नैयायिकोक्तलक्षणया वा आश्रयबोध इति सर्वैरेवग्रन्थकारैः स्वीकृतत्वेनात्रापि मत्वर्थीयाच्प्रत्ययेनाश्रयबोधः स्वीकरणीय इत्येवयुक्तम् नीलकण्ठाचार्याणामुक्तिस्तूपायस्योपायान्तरादूषकत्वमात्राभिप्राया ।

भेदवादिभिरानन्दतीर्थीयादिभिरपि यस्सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तप इति वाक्यविरोधेन विज्ञानं ब्रह्मेत्यत्र विज्ञानाधिकरणं ब्रह्मेत्युक्तं लौकिकेपि बहुकपालोघट इत्यादौ, तथादृष्टमिति ।

यः सर्वज्ञः सर्वविदिति । 'यस्य ज्ञानमयं तप' इति वाक्याविरोधाय विज्ञानं ब्रह्मेत्यत्र विज्ञानाधिकरणं ब्रह्मेत्यानन्दतीर्थीयव्याख्यानमप्येवमेव बोध्यमिति सर्वमनवद्यम् । "बहुकपालोघट इत्या-

दाविति। वृत्तेशाखेतिवत् लोकदृष्ट्यनुसारेणावयविन्य-
वयवनिरूपिताधिकरणत्वमारोप्य बहुकपालाधिकरणं
घट इति बोधः । "तथादृष्टमिति" ।

समानविभक्तिकस्थलेप्याधाराधेयभावसम्बन्धे-
नान्वयोदृष्टइतिभावः यद्यप्यत्रबहुव्रीहिणैव तादृश-
बोधोनिर्वहति तथाप्येकार्थीभावानङ्गीकर्त्तृमते उत्त-
रपदेऽन्यपदार्थलक्षणायाएवस्वीकारेणतत्स्थानीयक-
ल्पान्तरस्याप्यवसरोस्तीत्याशयेनैवमुक्तम् ।

नचाननशिरोग्रीवइत्यस्याननशि-
रोग्रीवमात्राधिकरणकलिङ्गार्थकत्वे त-
स्मात्सर्वगतश्शिव इति । वाक्यविरोध
इति वाच्यम् ।

"वाक्यविरोध इति" । परिच्छिन्नत्वमपरि-
च्छिन्नत्वञ्चैकस्मिन्नसम्भवतीतितयोरेकत्रोक्तिर्बाधि-
ताभवतीति भावः

भक्तानुग्रहार्थमौपाधिकपरिच्छि-
न्नेष्टलिङ्गरूपेणाननशिरोग्रीवासुसूक्ष्म-
ज्योतिर्लिङ्गरूपेणगुहारूपदहराम्भो-
जे पूर्ववाक्येन स्थितिं प्रदर्श्य वास्तवि-

कापरिच्छिन्नरूपप्रदर्शनपरःसर्वव्यापी च भगवानित्युत्तरवाक्यसन्दर्भ इति योजयितुं शक्यत्वात् ॥ अत एव पूर्ववाक्यावगतपरिच्छिन्नरूपसमुच्चयार्थस्सर्वव्यापी च भगवानित्यत्र चकारस्सार्थकः ।

"भक्तानुग्रहार्थमिति"। तथाचवस्तुतोऽपरिच्छिन्नएवेश्वरोभक्तानुग्रहार्थंस्वेच्छयापरिच्छिन्नरूपं परिकल्प्याधितिष्ठतीति परिकल्पितरूपगतमेव परिच्छिन्नत्वमपरिच्छिन्नत्वञ्चात्मगतमिति न कश्चिद्विरोध इति भावः ।

अथैवमपि उत्तमाङ्गे गलेवापि कुक्षौ वक्षस्थलेपि वा । तथा हस्ततलेवापि प्राणलिङ्गं धरेत्सुधीरिति सिद्धान्तशिखामणिवचनेन कृत्वा निधेहि सततं लिङ्गं वस्त्रेणावेष्टितम् । मस्तके कन्धरे कुक्षौ वक्षस्यथ करस्थले ॥ इति स्कान्दे शङ्करसंहितावचनेन च शि-

रोग्रीवेलिङ्गधारणप्रसिद्धावपि आन-
ने तदभावात्कथमेतदित्यनाकलितर-
मणीयं मननात्त्रायते यस्मात्तस्मान्म-
न्त्रोयमीरितः। वाच्यवाचकरूपेण द्वि-
धा मन्त्रः प्रकीर्त्तितः। वाचकोवर्णरू-
पः स्याद्वाच्यश्च परमश्शिवः॥ मनुदे-
वतयोरैक्यं तस्मादाहुर्महर्षयः। इति
व्यासनिरुक्त्या।

नमः पीठमिति प्रोक्तं शिकारं म-
ध्यमीरितम्। वाकारं गोमुखं वृत्तंयका-
रं गोलकं स्मृतम्। ओँङ्कारं लिङ्गमा-
ख्यातं षड्वर्णं लिङ्गमुच्यते॥ इति सिद्धा-
न्तसारावलीवचनेनच पञ्चाक्षरीमन्त्र
लिङ्गयोरैक्येन मन्त्ररूपेणानने लिङ्ग-
रूपेण शिरोग्रीवयोरधिष्ठित इति वक्तुं
शक्यत्वात्॥

"नमः पीठमिति" लिङ्गस्याधारभूतं योनि-
मण्डलाद्यवयवकं पीठमित्युच्यते तद्रूपत्वं मन्त्राव-

यवे नमःशब्देऽआरोप्यतेमध्यरूपत्वं मन्त्रावयवेशि-शब्दे आरोप्यते गोमुखपदेन तदन्तर्गतं जलप्रवहणमुच्यते तद्रूपत्वं वा शब्दे आरोप्यते गोलकपदेन लिङ्गाधारभूतं विवरं कथ्यते तद्रूपत्वेन मन्त्रावयवो यकारः कल्प्यते ॐकारश्च लिङ्गरूपेण कल्प्यते एवं लिङ्गमन्त्रयोरैकत्वसिद्धौमन्त्ररूपेणाननवृत्तित्वात् सर्वाननशिरोग्रीवेत्यत्राननस्य शिवधारणस्थानत्वोक्तिर्न विरुध्यत इति भावः। ननूत्तमाङ्गे गले वापि कुक्षौ वक्षस्थलेपि वा तथा हस्ततले वापि प्राणलिङ्गं धरेत्सुधीरिति" वाक्येन लिङ्गधारणाधिकरणत्वेन बहूनां स्थानानामुक्तेः किं सर्वत्र तद्धारणं कर्तव्यमाहोस्वित् क्वचिदेवेत्याशंक्य समाधत्ते।

अत्र च व्रीहिभिर्यजेत यवैर्यजेतेत्यत्र पुरोडाशनिष्पादनप्रयोजनस्यैकत्वेन। यथा विकल्पस्तद्वत्कदाचिच्छिरसि कदाचिद्ग्रीवादिषु वा धार्यमित्यवगन्तव्यम्।

अत्र च व्रीहिभिरिति। प्रयोजनस्यैकत्वेनेति। तथा च व्रीहियवयोः पुरोडाशनिष्पादनस्यैवोत्तमाङ्गादिषु लिङ्गधारणानां मोक्षरूपस्य प्रयोजनस्यैक-

त्वमस्तीति भावः । समानफलकत्वादैच्छिको विकल्प एवात्रस्थानानामस्तीत्यवगन्तव्यम्

अपि चास्यामुपनिषदि क्षरं प्रधानममृताक्षरं हर इति परमेश्वरमुपक्रम्य-लिङ्गधारणमाख्यातं द्विधा सर्वार्थसाधकैः । बाह्यमाभ्यन्तरं चैवमुनिभिर्मोक्षकाङ्क्षिभिः । आधारे हृदये वापि भ्रूमध्ये वा निरन्तरम् ॥ ज्योतिर्लिङ्गानुसन्धानं तदेवान्तरमुच्यते । अन्तर्धारयितुंलिङ्गमशक्तश्चात्तएववा बाह्यं च धारयेल्लिङ्गं तद्रूपमिति निश्चयादिति सिद्धान्तशिखामणिवचनप्राप्तमुभयविधधारणमपि तस्याभिध्यानाद्योजनात्तत्त्वभावादित्यनेन तस्याभिध्यानात् ज्योतिर्लिङ्गरूपेणान्तरमनुध्यानात् योजनादिष्टलिङ्गरूपेण संयोगादिति प्रदर्श्य कुत्रधर्तव्यमित्या-

काङ्क्षायां धारणाधिकरणप्रदर्शनार्थं प्रवृत्तमिदं सर्वाननशिरोग्रीव इत्यादिवाक्यं तत्र गुहाशय इति अन्तर्लिङ्गधारणस्थानं प्रदर्श्य बहिर्लिङ्गधारणस्थानाप्रदर्शने सन्दर्भविरोधो वज्रलेपायते ।

क्षरं प्रधानमिति । प्रधानं प्रकृतिपदवाच्यं साम्यावस्थापन्नं गुणत्रयम् क्षरं विकारि अमृताक्षरं हर इति। हरः परमेश्वरः अमृतम् अनश्वरम् अक्षरम् अविकारी प्रणवप्रतिपाद्यो वा उपक्रम्य प्रस्तूय आधारे नाभिचक्रे ज्योतिर्लिङ्गानुसन्धानं ज्योतिर्मयस्य लिङ्गस्य अनुसन्धानम् स्मरणमेवान्तर्लिङ्गधारणं कथ्यत इत्यर्थः । तद्रूपमिति । ज्योतिर्मयशिवस्वरूपमिति निश्चयादेतादृशं निश्चयं प्रगृह्येति ल्यब्लोपे पञ्चमी सिद्धान्तशिखामणिवचनप्राप्तमिति । एतद्ग्रन्थस्याप्येतन्मते ऽत्यन्तमभ्यर्हितत्वेनैतदीयवचनबलात् कर्त्तव्यतया प्राप्तमुभय विधलिङ्गधारणम् तन्मूलभूतश्रुत्यापि बोधितमस्तीति भावः "अनुध्यानात्" चिन्तनात् एवं श्रुत्याद्विविधलिङ्गधारणं विहितत्वेन व्याख्याय क्व तत् कर्त्तव्यमिति स्थानापेक्षायां प्रवृत्तं सर्वाननशिरोग्रीव इति वाक्यम् गुहा-

शयइत्यंशेनान्तर्लिङ्गधारणायबुद्धिरूपांगुहांप्रदर्श्य सर्वाननशिरोग्रीव इत्यंशेनबाह्यलिङ्गधारणस्थानं प्रदर्शयतीति सर्वं समञ्जसं भवति अन्यथा ऽपेक्षितयावदंशाकथनेनप्रकरणस्यन्यूनत्वंसर्वाननेत्यंशस्यवैयर्थ्यञ्चेत्येतदाशयः।

यद्येवं नांगीकरोषि तदा सर्वाननशिरोग्रीव इत्येतन्निरर्थकमेव स्यात्। तथाहि अनेनवाक्येन शिवस्याननशिरोग्रीवाभेदोविधीयते। आहोस्वित्तद्वृत्तित्वम्। नाद्यः। सर्ववाक्यं सावधारणमितिन्यायेन तावन्मात्राभेदसिद्धौ सर्वोह्येषरुद्रइति श्रुतिविहितसार्वात्म्यभङ्गापत्तेः। न द्वितीयः। तस्मात्सर्वगतश्शिव इति वाक्यापादितसर्वगतत्वरूप ब्रह्मलिङ्गस्य सङ्कोचापत्तेः अस्मन्मते तु सार्थक्यमुक्तमेवेति।

निरर्थकमेवस्यादिति। सर्वाननशिरोग्रीवइतिविशेषणेनसर्वाननाद्यभेदोवासर्वाननादि वृत्तित्वं वा बोधयितुं न शक्यते सर्वात्मकत्वसर्वगतत्वयोरन्यत-

रस्यावश्यं भङ्गापत्तेर्वामेनाक्ष्णा पश्यतीत्युक्तेरेवकारं विनापिवामेनैवपश्यतीत्यवधारणप्रतीतेरेतादृशस्थल इतरव्यावृत्तिलाभस्यैात्सर्गिकत्वादित्याशयः तदेवोक्तं सर्वं वाक्यं सावधारणमिति एवमेवास्मिन् ग्रामे क्षत्रियो धनिक इत्युक्तौ क्षत्रिय एवात्र धनिक इत्यादिप्रतीतिरप्युदाहर्त्तव्या। यद्यपि देवदत्तस्य चत्वारः पुत्रास्सन्तीत्यत्र देवदत्तस्यैवेति नप्रतीयते तथापि बाधनिश्चयोपस्थित्या तदंशे ऽवधारणाप्रतीतावपि चत्वार एव सन्त्येवेत्यंशान्तरे अवधारणप्रतीतिरस्त्येव स्पष्टं चेदम् अथेदानीं गामभ्याज कृष्णां देवदत्तदण्डेनेत्यत्र सर्वंनिर्दिष्टं गामेव कर्म अभ्याजैव क्रिया देवदत्त एव कर्त्तेत्यादि ग्रन्थेन एवकारं विनापि तदर्थपरत्वप्रतीतिस्थलप्रदर्शकमहाभाष्ये तच्चेति अधिकरणताबोधकपदं चेत्यर्थः आश्रयलक्षणादिकन्तु विनाप्रमाणमाश्रयितुं न शक्यत इति भावः।

ननुसर्वाननशिरोग्रीव इत्यत्राधिकरणताबोधकपदसत्त्वे सर्वमेतदेवं स्यात्तच्चात्रनास्तीतिचेन्नैवं आननशिरोग्रीवाः अधिकरणत्वेनास्य सन्तीति मत्वर्थीयाचप्रत्ययेन एतद्वाक्यवैयर्थ्यप-

परिहाराय वरं हि वाक्यवैयर्थ्यात्प-
दमात्रस्य लक्षणेतिन्यायेनलक्षणया वा
तद्बोधावश्यम्भावात् ॥

तद्बोधावश्यम्भावादिति । लिङ्गधारणाश्रयप्र-
तिपादनपरत्वंविना सर्वाननेतिवाक्यवैयर्थ्यापत्यात-
द्वाक्यमेवाश्रयलक्षणादौ प्रमाणं भवतीति भावः वस्तु-
तः "सहस्रशीर्षापुरुष" इति वत् सर्वतः पाणिपाद-
न्तत् सर्वतोक्षिशिरोमुखम् इति वच्च सर्वेषाम् श्रान-
नशिरोग्रिवं यस्येति व्यधिकरणबहुव्रीहिणासर्वात्म-
कत्वबोधकमेवेदमपीति बोध्यम् ।

अभ्युपगतं चपूर्वतन्त्रे, एकादश-
पशोरवदानानितानिद्विरवद्यतीत्यत्र
पाशुकेहविषि प्रकृतिवद्विकृतिः कर्त-
व्येति चोदकेनैव द्विरवदानप्राप्तौ ता-
निद्विरवद्यतीति अवदानद्वित्वविधा-
यकवाक्यस्य वैयर्थ्यमिति पूर्वपक्षी-
कृत्य यद्यपि चतुरवत्तोयजमानः पञ्चा-
वत्तैव वपाकार्येति वाक्ये वपापदस्य
हृदयादिसाधारण्येन पाशुकहविर्मात्रे

लक्षणां स्वीकृत्य हृदयादिष्वपि पञ्चावदानसिध्यर्थं उपस्तरणाभिघारयोस्सतोरवदानत्रितयप्राप्तौ हविर्द्विरवदातव्यम् पञ्चसंख्यापूर्त्तिस्तूपस्तरणादिवृध्याकर्त्तव्यमिति तत्सार्थक्यं साधितमिति सर्वं सुस्थमित्यास्माकीनः पन्थाः ।

अभ्युपगतञ्चपूर्वतन्त्र इति । वाक्यवैयर्थ्यवारणायैकपदस्य लाक्षणिकत्वं पूर्वमीमांसायां स्वीकृतमस्तीत्यर्थः तदेव दर्शयति । एकादशेति । पाशुके हविषि श्रूयते "एकादशपशोरवदानानि तानि द्विरवद्यतीति" पाशुकयागे पशोरेकादशाङ्गानि तानि प्रत्येकं द्विः अवद्यति तेभ्यः अवदानपूर्वकंवारद्वयं हविरवयवं गृह्णातीत्यर्थः अस्य च कर्मणः सोमविकृतित्वेन प्रकृतिवद्विकृतिः कर्त्तव्येति चोदकवाक्येनैवैतदीयहविष्षुद्विरवदानस्यप्राप्ततयाद्विरवद्यतीति वाक्यस्य वैयर्थ्यं भवतीति पूर्वपक्षे अस्मिन्नेव प्रकरणे यद्यपिचतुरवत्ती यजमानः पञ्चावत्तैव वपाकार्येति वपायाः पञ्चावदानानि विधीयन्ते पञ्चावदानस्थले च

प्रथमावदानमुपस्तरणार्थमाज्यस्य क्रियते ऽनन्तराव-
दानत्रयं हविषः क्रियते ऽन्तिममवदानमभिघारणार्थं
पुनराज्यस्यैव क्रियते एवं पञ्चत्वसंख्यापूर्यते अत्र तानि
द्विरवद्यतीति वाक्यवैयर्थ्यपरिहाराय वपापदस्य पा-
शुकहविःसामान्येलक्षणयाहृदयादिहविःष्वपि पञ्चा-
वत्तं प्राप्नोति तत्रचोपस्तरणाभिघारणाभ्यां द्वित्व-
संख्याया निष्पन्नत्वेन पञ्चत्वसंख्यापूर्त्तये हृदयादीनां
त्रिरवदानं प्राप्नोति तद्बाधाय तानिद्विरवद्यतीत्युच्यते
तेन हविरवदानेषु पूर्वप्राप्तत्रित्वस्य द्वित्वेन बाधात्
पञ्चावत्तैववपाकार्येति प्राप्तपञ्चत्वसंख्यायाः पूर्त्तिः
उपस्तरणार्थमवदानस्य वारद्वयकरणेनाभिघारणाय
वा वारद्वयकरणेन करणीयेति सिद्धान्तितम् अत्र यथा
तानिद्विरवद्यतीति वाक्यस्यवैयर्थ्यवारणाय वपाप-
दस्य हविस्सामान्ये लक्षणा स्वीक्रियते तथा सर्वान-
नशिरोग्रीवेत्यादिवाक्यस्य वैयर्थ्यवारणाय सर्वानन-
शिरोग्रीवपदस्य सर्वाननाद्यधिकरणके लक्षणास्वी-
कर्त्तव्येति तात्पर्यम् ।

पूर्वाचार्यास्तुसर्वलिङ्गं स्थापयती-
त्यत्र नापूर्वविधिः पाणिमंत्रं पवित्र-
मिति विशेषणास्यवक्ष्यमाणरीत्या पा-
ण्यधिकरणकपूजाप्रतिपादकत्वसमर्थ-

नेन तदन्यथानुपपत्या लिङ्गधारणप्राप्तौ त्रैकालिकाप्राप्त्यभावात् इत्यूचुः ।

पूर्वाचार्यास्त्विति । पाणिमन्त्रं पवित्रमिति पदद्वयं पाणौ मन्त्रः पूजनं यस्येति व्युत्पत्त्या पूयतेऽनेनेति व्युत्पत्त्या च पाण्यधिकरणपूजाकर्मत्वमशुचिकाले धारणेपि पवित्रत्वञ्च लिङ्गस्य बोधयति प्रतिदिनं तादृशपूजनञ्च लिङ्गधारणं विना नोपपद्यते इत्यन्यथा नुपपत्त्या अर्थापत्तिप्रमाणेन लिङ्गधारणस्य प्राप्ततयाचस्थापयतीत्यस्यापूर्वविधित्वन्नसम्भवतीति पूर्वाचार्या ऊचुरित्यर्थः अत्रारुचिबीजन्तु पार्थिवादिलिङ्गपूजनेनापि तन्निर्वाहादन्यथानुपपत्त्यभावः । एतावता प्रबन्धेन सर्वलिङ्गं स्थापयतीत्यत्रापूर्वविधित्वं निराकृत्यनियमविधित्वमा शङ्कते ।

ननु मास्त्वपूर्वविधिः परन्तु याजनाध्यापनप्रतिग्रहैर्ब्राह्मणोधनमर्जयेदित्यादाविवनियमविधिरेवस्यादितिचेत्तदपिगगनकुसुममालिकाधारणमनुकरोतिमुक्तेविषये, भस्मच्छन्नो भस्मशय्याशयानोरुद्राध्यायीमुच्यते

सर्वपापैरिति शातातपस्मृत्यादिवि-
हितभस्मरुद्राक्षादिधारणस्येव लिङ्ग-
धारणस्यापि पक्षतः प्राप्तौ लिङ्गधा-
रणमेवकर्तव्यं न भस्मादीति नियमो-
ङ्गीकरणीयः । सोप्यनिष्ट एव । पिण्ड-
तापिण्डविज्ञानं संसारगुणहेयता ।
दीक्षालिङ्गधृतिश्चैव विभूतेरपि धार-
णम् । रुद्राक्षधारणञ्चैवपञ्चाक्षरजपस्त-
था । भक्तिमार्गक्रियाचैव गुरोर्लिङ्गस्य
चार्चनम् । योगिनश्चतथाह्येषां प्रसा-
दस्वीकृतिस्तथा । एतानि शिवभक्तस्य
कर्तव्यानि प्रयत्नत इति सिद्धान्तशि-
खामणौ सर्वेषामप्यावश्यकत्वोक्तेः ।

नन्वित्यादिना । याजनाध्यापनप्रतिग्रहैर्ब्राह्म-
णो धनमर्जयेदित्यत्र धनार्जनस्य सुखदुःखाभावहेतुत-
यारागादेव प्राप्ततया याजनाध्यापनप्रतिग्रहैरेवेति
नियमार्थो यथाऽर्जनविधिर्भवति एवमेवायमपि लिङ्ग-

धारणमेव कुर्यादिति नियमर्थोऽस्त्वित्याशयः निराकरोति तदपि गगनकुसुमेत्यादिना ।

अत्र प्रकरणे नियमपदं परिसंख्यापरं मुक्ते विषय इति ।

मुक्तपुरुषरूपविषय इत्यर्थः अयं भावः नियमकल्पे सर्वलिङ्गंस्थापयतीत्यस्य सर्वलिङ्गमेव स्थापयतीति वचनव्यक्तिः स्यात् तथाच मुक्तपुरुषे भस्मरुद्राक्षादिधारणानां व्यावृत्तिपरोऽयं विधिः स्यात् शरीराधिकरणकस्थापनस्य धारणरूपतायां पर्यवसानात् तच्चानिष्टमेवापद्येत विभूतिरुद्राक्षादिधारणस्यात्यन्तावश्यकत्वात् तदेव दर्शयति पिण्डतापिण्डविज्ञानमित्यादिना पिण्डतापदेन पापाभाव उच्यते पिण्ड पदेन तद्वान् शुद्धात्मा उच्यते सांसारिकपदार्थस्य पुत्रकलत्रादेर्हेयत्वस्य त्याज्यत्वस्य ज्ञानं दीक्षायाः लिङ्गस्य, विभूतेः रुद्राक्षाणां धारणं पञ्चाक्षरजपः भक्तिमार्गक्रियाश्रवणकीर्त्तनाऽऽलयपरिमार्जनादि क्रियागुरोर्लिङ्गस्य योगिनाञ्चार्चनं पूजनम् एषामेव प्रसादस्वीकारश्चैतानि शिवभक्तस्यावश्यकर्त्तव्यानीत्यर्थः। अत्र मुक्तइत्यधिकार्य्युपलक्षणम् ।

ननु तर्हिलिङ्गधारणाकर्तव्यतानिषेधपूर्वककर्तव्यताफलकपरिसङ्ख्यैव

भूयादिति चेन्नैवम्। तत्कर्त्तव्यताऽकर्त्तव्यतयोरेकदाऽप्रसक्त्या समुच्चयासंभवे परिसंख्यायोगादिति पूर्वपक्षः॥

ननु तर्हीति। अस्मिन् प्रकरणे नियमपरिसंख्यापदयोः प्रयोगौ वैपरीत्येनानवधानतः कृतौ इतरव्यावर्त्तकाकारोपगमे पञ्चैव पञ्चनखाभक्ष्या इत्येतत्सदृशेनियमपदस्यलिङ्गधारणाकर्त्तव्यतानिषेधपूर्वककर्त्तव्यताफलकाकारस्वीकारेच श्रुतौ भार्यामुपेयादेवेत्येतत्सादृश्यप्राप्तौ परिसङ्ख्यापदस्य प्रयोगात् वस्तुतः पूर्वत्रैव परिसङ्ख्यापदस्य प्रयोग उचितःसमुच्चयासंभवे परिसंख्यायोगादिति यद्यपि परिसंख्यायां नियमे वा कुत्रापि समुच्चयप्राप्तेरपेक्षा नास्ति रागतः प्राप्तपञ्च पञ्चनखभक्षणविधानेन कदाचित् प्राप्ततदितरपञ्चनखभक्षणस्य एवं तुषनिवृत्तिहेतुतया स्वयं प्राप्तावघातविधानेन कदाचित् प्राप्तस्योपायान्तरस्य नखविदलनादेश्च व्यावृत्तेर्बोधनात् तथापि "एतानि शिवभक्तस्य कर्त्तव्यानि प्रयत्नत" इति अवश्यकर्त्तव्यतोक्तावकर्त्तव्यतायास्वतएवनिषेधात् नियमादेरपेक्षा नास्तीतिभावः।

अत्रोच्यते। सर्वलिङ्गंस्थापयतीत्यत्रापूर्वविधिरेव नच धारणस्य सर्वा-

ननशिरोग्रीव इति वाक्यविहितत्वेन न त्रैकालिकाप्राप्तिरितिवाच्यम् ।

न त्रैकालिकाप्राप्तिरिति ।

तथा च विधिरत्यन्तमप्राप्ताविति लक्षणलक्षितं त्रैकालिका प्राप्तप्रापकत्वरूपंविधित्वं न सम्भवतीति भावः ।

अस्य स्वप्रतिपाद्याधिकरणप्रतियोगिलिङ्गधारणविधायकसर्वलिङ्गवाक्यसापेक्षत्वेन उपजीवकेनोपजीव्ये ऽन्यथासिध्ययोगात् ।

स्वप्रतिपाद्याधिकरणेति । स्वं सर्वाननेति वाक्यम् तत् प्रतिपाद्यान्यधिकरणान्याननशिरोग्रीवरूपाणि तेषां प्रतियोगिसंबन्धितन्निष्ठाधिकरणतानिरूपकं यत् लिङ्गधारणं तद्विधायकं यत् सर्वलिङ्गंस्थापयतीतिवाक्यं तत् सापेक्षत्वेन तद्बोध्याधेयज्ञाननिवर्त्याकाङ्क्षावदर्थबोधकत्वेन अयं भावः आधेयबोधनं विना केवलाधिकरणताबोधकवाक्यं स्वजन्यत्वेन तात्पर्यविषयीभूतबोधाय पर्याप्तं न भवतीति आधेयबोधकं वाक्यान्तरमपेक्षते इति प्रकृते सर्वाननेति वाक्यस्य सर्वलिङ्गंस्थापयतीत्यस्य च पर-

स्परापेक्षितार्थबोधकत्वेनैकवाक्यतापन्नतया मिलित्वै-वोद्देश्यीभूतबोधपर्याप्ततया च नैकेनापरस्य प्राप्तप्रा-पकत्वं वा वैयर्थ्यं वा नियमत्वं वा शङ्कितुं शक्यत इति भावः ।

न चास्य स्वसमानाधिकरणात-स्याभिध्यानाद्योजनात्तत्त्वभावादिति वाक्यविहितधारणाधिकरणनिरूपक-त्वेन न सर्वलिङ्गवाक्यसापेक्षतेति वाच्यम् ।

नचास्येति । स्वसमानाधिकरणं यत् तस्याभि-ध्यानाद्योजनादिति वाक्यम् तद्विहितं यद्धारणं तद-धिकरणनिरूपकत्वेन । अत्र निरूपकत्वेनेत्यस्य बोध-कत्वेनेत्यर्थः स्वसमानाधिकरणेत्यस्य च स्वप्रकरणस्ये-त्यर्थः । इदमेवैतच्छङ्कायां बीजं स्वसन्निहितेन स्वो-त्थापिताकाङ्क्षापूरणसम्भवे विप्रकृष्टेन तत् पूरणस्या-त्यन्तानौचित्यादितिचभावः ।

वैषम्यात् । अत्रानितरसाधारण-लिङ्गश्रुतिसत्त्वेन स्थापयतीति धारण-विधायकपदसत्त्वेनच विलम्बोपस्थि-तिकतद्वाक्यापेक्षया बलवत्वात् ।

वैषम्यादिति। तस्याभिध्यानादिति वाक्यात्सर्वलिङ्गवाक्यस्य वैलक्षण्यादित्यर्थः वैलक्षण्यमेव दर्शयति। अनितरसाधारणेति।

लिङ्गपदं शिवादितरदेवे न प्रयुज्यते एवं स्थापयतीति पदञ्च स्थापनादन्यत्र न प्रयुज्यते एतत्पदद्वयस्यानितरसाधारणतयाविशेषार्थबोधकस्याधेयाकाङ्क्षाशमनाहंस्योपलम्भे तस्याभिध्यानादिति सामान्यवाक्येनविलम्बेनार्थोपस्थापकेन तदपेक्षाशमनमनुचितमिति भावः।

न च लोकवेदाधिकरणेन व्याकरणादिना गृहीतशक्तिकलौकिकशब्दानामेव वैदिकत्वनिर्णयेन पशुना यजेतेत्यादौ पश्वादिशब्दानां शक्तिग्रहार्थं व्याकरणादिसापेक्षत्वेपि, यथा विधायकत्वं स्वीकृतं तद्वदिहापि किं न स्यादिति वाच्यम्।

लोकवेदाधिकरणेति पूर्वमीमांसायां प्रथमाध्यायस्य तृतीयपादे "चोदनाभावादर्थैकत्वमविभागादिति" त्रिंशे सूत्रे लौकिकवैदिकशब्दानामेकार्थकत्वं सिद्धान्तितम्। तत्र देवा इत्यत्र देवासः भवतीत्यत्र

भवति कर्णैरित्यत्र कर्णाभिरिति लौकिकप्रयोगापेक्षया वेदे विलक्षणप्रयोगदर्शनेन लोकापेक्षया वैदिकशब्दानामन्यार्थत्वं भविष्यतीति पूर्वपक्षीकृत्य सिद्धान्तबोधनायेदं सूत्रं प्रणीतं प्रयोगेति। अयमर्थः प्रयोगस्य कर्मानुष्ठानस्य चोदनायाविधायकवाक्यस्याभावादर्थाबोधकत्वप्रसङ्गादर्थैकत्वं लौकिकवैदिकशब्दयोरेकार्थत्वं हेत्वन्तरमुच्यते अविभागात् एकानुपूर्वीकशब्दानां मीमांसकमतेऽभेदात् शब्दाभेदादप्यर्थाभेद उचित इतितात्पर्य्यम्। अयं भावः लोके व्यवहारादिना गृहीतशक्तिकानां पदानां वेदेपि सर्व्वोपगमेऽर्थबोधकत्वमुपपद्यते वैदिकशब्दानां लौकिकशब्देभ्यो भिन्नत्वभिन्नार्थकत्वोपगमे तु शक्तिग्रहाभावादर्थबोध एव तेभ्यो न स्यादिति व्यर्थान्येव वाक्यानि भवेयुरित्यवश्यमेकार्थकत्वं लौकिकवैदिकशब्दानां मन्तव्यम्। शक्तिग्रहार्थं व्याकरणादिसापेक्षत्वेपीति पशुनेत्यत्र तृतीयानिष्ठा यजेतेत्यत्र यजनिष्ठालिङ्निष्ठा च शक्तिः कर्तृकरणयोस्तृतीया विधिनिमन्त्रणामन्त्रणेत्यादिशास्त्रैर्बोध्यत इति तत् सापेक्षत्वमत्र बोध्यम्। तद्वदिहापि किंन स्यादिति यथा पशुना यजेतेति वाक्यस्य व्याकरणसापेक्षत्वेपि विधित्वं न हीयते एवं सर्वाननशिरोग्रीव इति वाक्यस्य सर्वलिङ्गस्थापयतीति वाक्यसापेक्षत्वेपि विधित्वं कस्मान्नभविष्यतीत्यर्थः पशुना यजेतेति वा-

क्यव्याकरणसूत्रयोरेकवाक्यत्वाभाववत् सर्वाननसर्वलिङ्गवाक्ययोरेकवाक्यत्वाभावात् स्वैकवाक्यतानापन्नवाक्यप्रापितमात्रप्रापकत्वेनापूर्वविधित्वं न संभवतीति तात्पर्य्यम् ।

व्याकरणादीनां शक्तिग्रहमात्रोपयोगित्वेन तथात्वेपि अत्र यावद्वाक्यार्थविचारंविना लिङ्गधारणाप्राप्तेस्तत्काल एव सर्वलिङ्गवाक्यस्य विधायकत्वासिद्धेः किञ्चात्र सर्वव्यापी च भगवान् इति लिङ्गस्तुतिसमर्पणेन अर्थवादत्वनिश्चयेसत्यनेन तदन्यथासिध्ययोगाच्च ।

शक्तिग्रहमात्रोपयोगित्वेनेति, वाक्यार्थविचारंविनेति, अयंभावः पशुना यजेतेत्यत्र प्रकृतवाक्यार्थबोधोपयोगिवृत्तिज्ञानाधीनपदजन्योपस्थित्यादिघटितकारणकलापसद्भावे स्वजन्यत्वेन तात्पर्यविषयीभूतबोधे जननीये वाक्यान्तरस्य कस्याप्यपेक्षानास्ति सर्वाननशिरोग्रीव इत्यनेन तु स्वघटकपदजन्योपस्थित्यादिघटितकारणसमुदायसत्त्वेपि आधे-

यांशबोधाय सर्वलिङ्गवाक्यस्यापेक्षा अस्त्येवेति । ततश्च व्याकरणेन पशुविधेः पदैकवाक्यतानास्ति इह त्वनुष्ठानोपयोगिबोधे उभयोरेकवाक्यताया आवश्यकत्वेन स्वैकवाक्यतानापन्नाप्रापितप्रापकत्वेनापूर्वविधित्वे न किञ्चिद्बाधकमित्याह विधायकत्वासिद्धेरिति, सर्वाननेत्येकवाक्यतानापन्नस्य सर्वलिङ्गवाक्यस्येत्यर्थः। पृथग्भूतस्य विधायकत्वासिद्धौ मिलितस्यैव विधायकत्वमित्यर्थात् सिद्धम् ततश्चोभयोरेकवाक्यघटकत्वान्नैकभागेनापरभागस्यान्यथासिद्धिसम्भव इत्याशयः।

यच्चोक्तं पाणिमन्त्रमिति विशेषणप्रतिपाद्यार्थान्यथानुपपत्त्या तस्य प्राप्तत्वेन विध्यसम्भव इति तन्न अस्यापि सर्वलिङ्गवाक्येन सामान्यतो धारणविधावधिकरणविशेषसमर्पकत्वेन तदुपजीवकेन तदन्यथासिध्ययोगादिति । पाणिमन्त्रमित्यस्य धार्यत्वेन मन्त्रोऽस्यास्तीति मन्त्रमिति मत्वर्थीयाच्प्रत्यये कृते मन्त्रं—लिङ्गं पाणौ मन्त्रं—पाणिमन्त्रमित्यर्थः।'तस्माद्धार्यं

महालिङ्गं पाणिमन्त्रेति मन्त्रत' इति लिङ्गपुराणोक्तेः ।

पाणिमन्त्रमिति मा भूत्सर्वाननेत्यनेन प्राप्तिः पाणिमन्त्रमित्यनेन तु प्राप्तिरस्त्येवेति पुनरपि विधित्वानुपपत्तिस्तदवस्थेत्याशयः । कथं पाणिमन्त्रमित्यस्य विधेयताप्रयोजकलिङ्गाद्यघटितस्य विधायकत्वमित्याशङ्कायामाह । अन्यथानुपपत्तीति, पाणिमन्त्रमित्यत्र मन्त्रपदेन लिङ्गमुच्यते मन्त्रोऽस्यास्तीति मत्वर्थीयाच्प्रत्ययस्वीकारात् पाणौ मन्त्रमिति व्युत्पत्या च पाणिस्थं लिङ्गं पाणिमन्त्रपदेनोक्तं भवति पाणिस्थत्वञ्च लिङ्गस्य धरणं विना नोपपद्यत इत्यर्थापत्तिप्रमाणेन धारणं कल्प्यत इति ग्रन्थकर्तुराशयः । अधिकरणविशेषसमर्पकत्वेनेति'' तथा च सर्वाननवाक्यवत् पाणिमन्त्रमिति विशेषणमपि पाणिरूपविशेषाधिकरणसमर्पकत्वेन सर्वलिङ्गवाक्यस्याङ्गमेवजातमिति न तेन सर्वलिङ्गवाक्यस्य वैयर्थ्यमितिभावः । तदुपजीवकेनेति'' तस्य सर्वलिङ्गवाक्यस्य उपजीवकेन अङ्गभूतेन पाणिमन्त्रमिति विशेषणेन तस्य सर्वलिङ्गवाक्यस्य अन्यथासिद्धेः वैयर्थ्यस्य अयोगादसम्भवादित्यर्थः । यद्यपि सामान्येन विशेषांश एवोपजीव्यत इति पाणिमन्त्रमिति विशे-

णस्योपजीवकत्वकथनमनुचितम् तथापि फलवत्सन्नि-
धावफलमङ्गमिति न्यायेन पाणिमन्त्रमिति विशेषणा-
स्याङ्गत्वे सिद्धे अङ्गेन च स्वसार्थक्यायाङ्गिनउपजीव-
नात् इयमुपजीवकत्वोक्तिर्द्रष्टव्या। प्रष्टुःसन्तोषाय
पूर्वपक्षमभ्युपगम्येदं समाधानं बोध्यम् वस्तुस्तु लिङ्ग-
निष्ठपाणिस्थत्वस्य लिङ्गसान्निध्यं विनाऽनुपपन्नत्वेन
सान्निध्यस्य च गृहभृत्यादिहस्तस्थितेनापि लिङ्गेना-
पपन्नत्वेन तत्साधारणसान्निध्यमात्रस्य कल्पयितुं श-
क्यत्वेपि धारणस्य विशेषरूपेण कल्पयितुमशक्य-
त्वात् पूर्वपक्षएवायं नोत्तिष्ठतीति बोध्यम्। अचप्र-
त्ययेन मन्त्रोऽस्यास्तीत्येतावन्मात्रंलभ्यते धर्यत्वेनेति
विशेषांशः कुतो लभ्यत इत्यत्र लिङ्गपुराणं प्रमाणमु-
पन्यस्यति "तस्माद्धार्यं महालिङ्गं पाणिमन्त्रेतिमन्त्र-
तइति" सर्वलिङ्गं स्थापयतीति वाक्यस्यापूर्वविधित्वं
संस्थाप्य पाणिमन्त्रं पवित्रमित्यंशस्य नियमविधित्वं
स्थापयति। अत्रचेत्यादिना,

अत्र च अग्निहोत्रं जुहोतीति
वाक्यविहितनिरधिकरणाग्निहोत्रना-
मकहोमस्याधिकरणसमर्पकाहवनीये
जुहोतीति वाक्यस्थल इव सर्वलिङ्ग-
वाक्यविहितलिङ्गे पीठाद्यधिकरण-

स्यैव पाण्यादेः पक्षतः प्राप्तौ पाण्यादिकमेवेति नियमो विधीयत इति। नचाहवनीयवाक्ये ऽधिकरणताबोधकसप्तमीविभक्तिसत्त्वेन तथात्त्वेप्यत्र तदभावात्कथमधिकरणविधित्वमिति वाच्यम्। लुप्तसप्तमीस्मरणेनात्राप्यधिकरणत्वप्रतीतेः। पवित्रशब्देन यज्ञोपवीतं परमं पवित्रमित्यत्रेव अशुचिकालधारणप्रयुक्ताऽपावित्र्यनिरसनद्वारा पावित्र्यं विधीयते।

अत्र च पाणिमन्त्रमित्यंशाइत्यर्थः अग्निहोत्रं जुहोतीत्यत्राग्निहोत्रशब्दस्य नामधेयतया ऽग्निहोत्राभिन्नहोमेन स्वर्गं भावयेदित्यर्थकत्वेन निरधिकरणकहोमविधावधिकरणविशेषापेक्षायां सामान्यरूपेणाहवनीयस्यापि पक्षे प्राप्तत्वादाहवनीये जुहोतीति वाक्येनाहवनीयमात्राधिकरणकत्वेनाग्निहोत्रहोमो नियम्यते एवं सर्वलिङ्गं स्थापयतीत्यनेनापि निरधिकरणकस्थापनैव प्रथमं विधीयते अधिकरणविशेषा-

पेक्षायां पीठाद्यधिकरणवत् पाण्यादेरपि पवित्रतः प्राप्तौ पाणिमन्त्रमिति वाक्येन पाण्यधिकरणकमेव लिङ्ग-पूजनं कर्त्तव्यमिति नियमो विधीयत इति भावः।

नचानेकविधाने वाक्यभेद इति वाच्यम्।

नचानेकविधानइति, पूज्यमानलिङ्गे पाण्य-धिकरणकत्वस्य पावित्र्यस्य चोभयोर्विधावित्यर्थः।

आग्नेयोऽष्टाकपालोमावास्याया-मित्यत्रैव अप्राप्तत्वे विधीयन्ते बह-वोप्येकयत्नत इति न्यायेनानेकविधाने दोषाभावादिति।

आग्नेयोऽष्टाकपाल इति, पुरोडाशमुद्दिश्याग्निदेवताकत्वस्याष्टकपालसंस्कृतत्वस्य च विधाने ऽवश्यं वाक्यभेदस्यादग्निदेवताकत्वाष्टकपालसंस्कृ-तत्वविशिष्टपुरोडाशकरणकामावास्या यागविधाने तु यथा वाक्यभेदो न मन्यते एवमेवेहापि पाण्यधिकरण-कत्वविशिष्टपवित्रत्वविशिष्टलिङ्गपूजनविधौ नास्ति वाक्यभेदः। तदुक्तम् 'प्राप्ते कर्माणि नानेको विधातुं शक्यते गुणः। अप्राप्ते तु विधीयन्ते वहवोप्येकय-त्नत इति।

नन्वेवमपि सर्वलिङ्गं स्थापयतीत्यनेन भूम्यामेव लिङ्गस्थापनं विधीयते स्थापयतीति पदस्वारस्येन सकलजनाचारविषयत्वेन च तस्यैवावश्यकत्वात् तथा च सति पाणिमन्त्रं पवित्रमिति विशेषणमपि पाणिनाऽभिमन्त्रितं षडध्वशोधनादिना संस्कृतं अत एव पवित्रमित्यर्थकं सत् सार्थकं भवतीति चेत् ।

नन्वेवमपीति वाक्यभेदशंकायाः परिहारेपीत्यर्थः 'भूम्यामेवेति' भूमिष्ठताम्रपात्रादिरूपे पीठइत्यर्थः । स्थापयतीति पदस्वारस्येनेनि । "राजवंशाजकृतगुणान्स्थापयिष्यति राघवः । कलशं स्थापयतीत्यादौ तथैव प्रतीतेरितिभावः । पाणिनाभिमन्त्रितमिति पाणिस्पर्शपूर्वकमन्त्रपाठेन कृतसंस्कारमित्यर्थः षडध्वशोधनेति" षड्न्यासात्मका अध्वानः शैवागमप्रसिद्धा वीरशैवदीक्षाविधिपुस्तके द्रष्टव्या विस्तरभयान्नेह लिख्यन्ते। तैः शोधनं मन्त्रैर्देवाश्रयत्वकरणं तेन संस्कृतम् आदिपदेन पूजनादिर्ग्राह्यः ।

अत्र वदन्ति स्थापयतीत्यस्य भूमिशरीरसाधारण्येनैव लिङ्गस्थापनविधायकत्वमित्यवसीयते श्रुतेः सङ्कोचासहिष्णुत्वाद्विनिगमकाभावाच्च । किञ्च सन्दिग्धे तु वाक्यशेषादिति न्यायेन पाणिमन्त्रमिति वाक्यशेषबलाच्छरीर एव लिङ्गस्थापनविधायकत्वं सिध्यति पुराणादौ, मान्य इत्यत्र पूजार्थकत्वेन प्रसिद्धधातुनिष्पन्नस्य मननशब्दस्य पूजार्थकत्वे मननात्पूजनात्त्रायत इति मन्त्रं पाणौ मन्त्रं पाणिमन्त्रमिति सिद्धे पाण्यधिकरणकपूजायाः स्थावरेऽप्रसक्त्या शरीरधृतलिङ्गपरत्वावसायात् ।

संकोचासहिष्णुत्वादिति, ततश्च भूम्यामेवेति न सिध्यतीति भावः तावतापि पाण्यधिकरणकपूजामात्रविषयकत्वं न लभ्यमित्याशङ्कायामाह । किञ्चेति,

"संदिग्धे तु वाक्यशेषादिति" अक्ताः शर्करा उपदधातीत्यत्र घृतेन तैलेन वा अक्ता इति सन्देहे तेजोवै घृतमिति वाक्यशेषे घृतस्तुतिदर्शनेन घृतेनाक्ता इति निर्णयस्सिध्यति एवमिहापि सर्वलिङ्गं स्थापयतीत्यनेन स्थापनार्हाधिकरणमात्रसाधारण्येन स्थापनविधौ भूमावन्यत्रवेत्यधिकरणविशेषजिज्ञासायां पाणिमन्त्रं पवित्रमिति वाक्यशेषात् । पाणावेव लिङ्गस्थापनं प्राप्नोति पाणिमन्त्रमिति शब्दस्य षडध्वशोधनादिसंस्कृतार्थकत्वं शक्त्यभावेन न सिध्यति । पाणौ पूजनेन त्राणकर्मइत्यर्थस्य गुरुर्मान्य इत्यदौ पूजार्थकत्वेन मनधातोः प्रसिद्धतया ऽनायासलभ्यत्वमस्तीत्याह । पुराणादाविति, ततश्च पाणिमन्त्रमिति शब्दात् पूजने पाण्यधिकरणकत्ववैशिष्ट्यलाभावत् पाण्यधिकरणकत्वस्य च पूजायाःस्थावरलिङ्गे बाधितत्वेन शरीरधृतलिङ्गविषयकत्वं निश्चीयत इत्याशयः इदमत्र बोध्यम् पाण्यधिकरणकत्वविशेषणस्य स्थावरलिङ्गे बाधाच्छरीरधृतलिङ्गमात्रविषयकत्वं यद्यपि सिध्यति तथापि नित्यलिङ्गधारणायाः प्रमाणान्तरेण साधनीयतयेह पाण्यधिकरणपूजनमात्रं साधयतीति न दोषः पुनरपि पाण्यधिकरणकत्वमाक्षिपति न च पाणिनेत्यादिना ।

नच पाणिना मननात्त्रायत इति

तृतीयासमासाश्रयणेन स्थावरेऽपि न विरोध इति वाच्यम् ।

पाणिना पाणिधृतबिल्वपत्रादिना मननात् पूजनात् त्रायते इत्येवं तृतीयान्तसमासाश्रयणेन स्थावरलिङ्गेपि सा पूजा बाधिता न भवतीति कथं तल्लाभ इत्याशयः । परिहरति । तथासतीत्यादिना,

तथासति सापेक्षसमासाश्रयणेन समर्थपरिभाषाभङ्गापत्तेः । सापेक्षत्वेपि गमकत्वात्तथाङ्गीक्रियते इति चेन्न पाणिपदवैयर्थ्यात् ।

ऋद्धस्य राज्ञः पुरुष इति विग्रहे राजन् ङस् पुरुष सु इत्यनयोः समासवारणाय सापेक्षमसमर्थवदिति वार्त्तिकेन सापेक्षे असामर्थ्यम् बोध्यते इति समर्थः पदविधिरिति परिभाषाबलात् सामर्थ्यमात्रविषकत्वात् समासविधायकं शास्त्रं तत्र न प्रवर्त्तते एवमेव पाणिना मननात् त्रायत इति विग्रहेपि मननशब्दार्थस्य पाण्यंशे सापेक्षतया असामर्थ्यात् सुप्सुपेतिसमासो न भवेदित्याशयः । गमकत्वादिति, देवदत्तस्य गुरुकुलं चैत्रस्य दासभार्य्ये

त्यादै। गुर्वादिपदार्थस्य देवदत्ताद्यंशे सापेक्षत्वेपि विग्रहबोध्यार्थबोधनक्षमत्वात् समासः स्वीक्रीयते यथोक्तं भर्तृहरिणा "सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते । वाक्यवत्साव्यपेक्षाहि वृत्तावपि नहीयत" इति अथवा नित्यसापेक्षस्थलेपूर्वपदार्थघटितसम्बन्धेन समुदायार्थेन सहैव देवदत्तादिपदार्थस्यान्वयः प्रथमं विवक्षितः अवयवार्थान्वयबोधस्तु फलतः सिध्यति अयं प्रकारोप्युक्तस्तेनैव यथा "समुदायेन सम्बन्धो येषां गुरुकुलादिना । संस्पृश्यावयवांस्तेतु युज्यन्ते तद्वतासहेति" एवमिहापि मननस्यक्रियारूपतया कारकांशे नित्यसापेक्षत्वात् निष्प्रत्यूहः समासो भविष्यतीत्याशङ्क्य निराकरोति "नेति" पाणिपदवैयर्थ्यादिति, सप्तम्यन्तत्वे ऽधिकरणलाभार्थं तच्चरितार्थमिति भावः। नच तृतीयान्तत्वेपि करणलाभायतदस्त्विति वाच्यम् देवान् यजेत इत्यादाविव पूजामात्रविधानेपि हस्तादेः करणत्वस्यौचित्येनैव लाभादिति।

नच मननात्त्रायत इत्युक्ते मानसादीनामपि करणत्वेन प्रसक्त्या तद्व्यवच्छेदार्थं पाणिपदमिति वाच्यम् । शिवपूजादिकं कार्यं मनोवाक्कायक-

र्मभिरित्यभियुक्तोक्त्या तेषामपि कर-णत्वप्राप्तेः किंच तृतीयासमासाश्रयणे एकदेशान्वयापत्तिः। नच सप्तमीतत्पु-रुषाश्रयणेपि एषदोष इति वाच्यम्। पाणिपदस्य विशिष्टेनैवान्वय स्वीका-रादिति।

तद्व्यवच्छेदार्थमिति मानसादीनां व्यवच्छेदा-र्थमित्यर्थः कर्ममात्रे मनःसमवधानस्यावश्यकतया पाणिनैवेति नियमेन तद्व्यवच्छेदेऽपसिद्धान्तापत्ति-रित्याह। "शिवपूजादिकं कार्य्यं मनोवाक्कायकर्म-भिरिति"। विशिष्टेनैवेति, नच तृतीयातत्पुरुषे-प्येतत्समाधानं सुलभमिति वाच्यम् उपासकपाणिनि-ष्ठकरणतानिरूपकत्वस्य परमेश्वरकर्तृकत्राणक्रियायां बाधेन तृतीयातत्पुरुषे विशिष्टान्वयस्य बाधितत्वात् उपासकपाण्यधिकरणकत्वन्तु उपासकपाणौ पूज्य-मानेश्वरकर्तृकत्राणक्रियायामपिसम्भवत्येवेति सप्तमी-तत्पुरुषे विशिष्टान्ययस्य वक्तुंशक्यत्वात्।

यच्चोक्तं पाणिनाऽभिमन्त्रितमिति तन्न। पुराणप्रसिद्धपूजावाचकस्याभिम-

न्वितार्थकत्वे गौणार्थस्वीकारापत्तेः। नचेष्टापत्तिः ईक्षत्यधिकरणविरोधात् तत्र तत्तेजऐक्षत ताआपऐक्षन्तेत्यादि-गौणार्थस्वीकारेण प्रायः पाठानुरोधा-द्गौणेक्षितृत्वमादायप्रधानपरत्वमिति पूर्वपक्षे एकत्रगौणार्थकशब्ददर्शनेपि सर्वत्रतथात्वायोगान्मुख्ये संभवति गौ-णार्थस्वीकारस्य जघन्यत्वेन च मु-ख्येक्षितृत्वमादाय ब्रह्मपरत्वमेवेति निर्णयादिति।

“प्रायः पाठानुरोधादिति, तत्तेज ऐक्षतता आप ऐक्षन्त इत्यारोपितेक्षणार्थकेक्षतिबहुलप्रकरणपठि-तत्वानुरोधादित्यर्थः अत्रवदन्तीत्यादिना सर्वलिङ्गं स्थापयतिपाणिमन्त्रं पवित्रमित्यनेन पृथिव्यादिसा-धारण्येन स्थापनं विधीयतइतिशङ्कां मतान्तरेण समाधाय स्वयं समाधत्ते अत्र ब्रूम इत्यादिना।

अत्रब्रूमः “निधनपतये नम इत्या-रभ्य एतत्सोमस्य सूर्यस्येत्यंतं सर्वायम

र्थवादः । तत्र अखंडमेकंलिंगं स्यात्त-
देव गुरुणा परं भावप्राणेष्टभेदेन
त्रिधा भूतं नगात्मजे। इष्टलिङ्गप्रकृतिके
आचारगुरुलिङ्गके । पार्थिवाप्ये इति
प्रोक्ते शैवागमविशारदैः । प्राणलिङ्ग-
प्रकृतिके तेजोवायुमये तथा । शिव-
लिङ्गचराभिख्ये लिङ्गे द्वे वरवर्णिनि ।
व्योमप्रकृतिकं लिङ्गं प्रासादाख्यं मह-
त्तरं । आत्मतत्वमयं प्रोक्तं महालिङ्गं
महत्तममिति सिद्धान्तशेखरवचनेाे-
क्तानां दशविधलिङ्गानां नमोन्तैः स्तु
तिर्दृश्यते। तत्रोर्ध्वलिङ्गाय नम इत्य-
खण्डलिङ्गमुच्यते तस्य सर्वचक्रोर्ध्वग-
तैकदलकपश्चिमचक्रस्थितत्वात् । हि-
रण्यलिङ्गायनम इत्यनेन प्राणलिङ्गं
स्तूयते। तप्तकाञ्चन सङ्काशङ्कन्दस्थान-

समाश्रितम् । योगिभिश्च सदा ध्येयं प्राणलिङ्गंविदुर्बुधा इति सिद्धान्तसारावलीवचनेन तस्य काञ्चनमयत्वनिश्चयात् । सुवर्णाय नम इतीष्टलिङ्गार्थवादः "नमः पीठमिति प्रोक्तं शिकारं मध्यमीरितं । वाकारं गोमुखं वृत्तं यकारं गोलकं स्मृतं ओङ्कारं लिङ्गमाख्यातं षड्वर्णं लिङ्गमुच्यते । इत्यनेन लिङ्गशरीरघटकत्वेनैव सुष्टुत्वविशिष्टवर्णरूपत्वनिश्चयात् । दिव्यलिङ्गाय नम इत्याकाशतत्वाधिष्ठितप्रसादलिङ्गस्तुतिः । दिविभवं दिव्यमिति व्युत्पत्त्या तयोरभेदात् । भवलिङ्गाय नम इत्यनेन गुरुलिङ्गस्तवः क्रियते । ज्येष्ठा जलमयी तत्र स्थित्युपादानरूपिणी । भवस्तदीशस्य ज्येष्ठो ज्येष्ठा तच्छ-

क्तिरीरितेति जलतत्वाधिष्ठितगुरुलि-
ङ्गेन भव लिङ्गाभेदात्। शर्वलिङ्गाय नम
इत्याचारलिङ्गस्य। वामात्मपृथिवीतत्व-
भूतवामात्मिकायया। सृष्टिः प्रवर्तते
वामासाशर्वक्षितिमूर्तिप इति सिद्धा-
न्तसारावलीवाक्येन पृथिवीतत्वाभि-
मानिनः आचारलिङ्गस्य शर्वलिङ्गाभेद-
प्रतिपादनात्। शिवलिङ्गाय नम इति
शिवलिङ्गस्य। अग्नेश्चरुद्ररूपत्वाद्रौ
द्राग्नेयीतदीश्वरः सर्वेपशुपतीरुद्रोरौ-
द्रीतच्छक्तिरिष्यत इत्यनेन तेजस्त्वा-
भिमानिशिवलिङ्गस्य शिवपदस्याना-
पन्न रुद्रपदवाच्याभेदप्रतीतेः। ज्वल-
लिङ्गाय नम इति चरलिङ्गस्य। प्राणस्य
कालरूपत्वात् कालशक्तिस्तुवायवी।
वायुमूर्तिपउग्रस्तु सकालइति विश्रुत

इत्यनेन वायुतत्वाधिष्ठितचरलिङ्गस्य उग्रपदवाच्यज्वललिङ्गाभेदनिश्चयात् परमलिङ्गाय नम इत्यात्मतत्वाभिमानिनो महालिङ्गस्य। आत्मलिङ्गाय नम इतिकारणशरीराधिष्ठितभावलिङ्गस्येति। तथाचार्थवादस्य आगमोक्ताचारोपाधिकभेदभिन्नशरीरधृतलिङ्गविषयत्वेन सर्वलिङ्गंस्थापयतीत्यस्य स्थावरलिङ्गविधायकत्वे विध्यर्थवादयोर्वैयधिकरण्यापत्तिः।

किं च उपक्रमोपसंहारावभ्यासो- पूर्वताफलम् अर्थवादोपपत्तीच लिङ्गं तात्पर्यनिर्णय इति षड्विधतात्पर्यलिङ्गानां मध्ये असंजातविरोधिनः उपक्रमस्य वेदो वा प्रायदर्शनादिति।

वेदोपक्रमाधिकरणन्यायेन बल-

वत्त्वेन ऊर्द्ध्वलिङ्गाय नम इत्याद्युपक्रमस्य प्राणलिङ्गपरत्वनिश्चये सर्वलिङ्गवाक्यस्य शरीरधृतलिङ्गव्यतिरिक्तविषयत्वे प्रकरणविरोधश्च।

एवमेवेदं व्याख्येयम् अव्यवहितपूर्वग्रन्थेऽसमाहितपूर्वपक्षस्याभावेनस्वारस्येनप्रतीयमानार्थस्य बाधितत्वात्। सर्वोयमर्थवाद इति, अनुपदमेव पठ्यमानेन सर्वलिङ्गं स्थापयतीति वाक्येन विहितस्य लिङ्गधारणस्येत्यर्थः धार्य्यमाणलिङ्गस्य पूर्वोक्तैर्मन्त्रैर्मन्त्रैरुत्कर्षवत्त्वेन बोधनरूपस्तुतिविषयीकृतैस्सर्वैरपि लिङ्गैरभेदावसायात् सर्वेषां पूर्वोक्तमन्त्राणां धारणविध्यर्थवादत्वं सिध्यति एवं विध्यर्थवादत्वसंपत्तावर्थवादभागस्य तद्विषयकत्वेवागमपर्य्यालोचनेन धार्य्यमाणलिङ्गविषयकत्वे निर्णीते विधिभागस्य तथात्वानुपगमे विध्यर्थवादयोर्वैयधिकरण्यं स्यात् तच्चानिष्टं। विहितमेव स्तूयत इति मीमांसकसिद्धान्तादित्याशयः एवं तात्पर्य्ये निरूपिते अक्षरयोजनामात्रमवशिष्यते तत्क्रियते अवधीयताम् "अखण्डलिङ्गमेकं स्यात्तदेव गुरुणा परमित्यादि" अत्र गुरुणेत्यनन्तरमुक्तमिति शेषः यद्वा गुरुणा

महता भेदेनेति योजनीयम् अत्रैवं दशविधलिङ्गानि गणयितव्यानि अखण्डलिङ्गम् १ भावलिङ्गम् २ प्राणलिङ्गम् ३ इष्टलिङ्गम् ४ पार्थिवरूपमाचारलिङ्गम् ५ आप्यरूपं गुरुलिङ्गम् ६ तेजोमयं शिवलिङ्गम् ७ वायुमयं चरलिङ्गम् ८ व्योमप्रकृतिकं प्रासादाख्यं लिङ्गम् ९ आत्मतत्वमेव महालिङ्गम् १० अत्राखण्डलिङ्गं ब्रह्मस्वरूपमन्येषां स्वरूपाण्युत्तरत्रस्पष्टानि एतेषां सर्वेषां लिङ्गानां नमोन्तैर्दशभिर्मन्त्रैः क्रमेण स्तुतिः क्रियते ऊर्द्ध्वलिङ्गायनम इत्यादिभिरखण्डलिङ्गं तस्य कथमूर्द्ध्वलिङ्गशब्दबोध्यत्वमित्याशङ्कायामाह तस्य सर्वेति, सर्वचक्रोर्द्ध्वगतैकदलक पश्चिमचक्रस्थितत्वेन सर्वचक्रोर्द्ध्वगतत्वादखण्डलिङ्गस्योर्द्ध्वलिङ्गत्वमितिभावः इदं चक्रमितरचक्रेभ्यः सर्वेभ्य ऊर्द्ध्ववर्त्यैकदलकञ्चहिरण्यलिङ्गाय नम इत्यनेन "तप्तकाञ्चनसंकाश" मित्यादिना वर्णित तप्तकाञ्चन सादृश्येन विशेषितत्वाद्धिरण्यलिङ्गपदवाच्यत्वमर्हं । प्राणलिङ्गं स्तूयते "सुवर्णाय नम" इत्यनेन च नमः शिवायोमिति मन्त्रघटक नमः शब्दपीठक षडक्षरात्मकमिष्टलिङ्गमुच्यते तस्यमन्त्रात्मकलिङ्गशरीरघटकत्वरूपसुष्टुत्वविशिष्टवर्णरूपत्वात् "दिव्यलिङ्गाय नम" इत्यनेन प्रसादलिङ्गस्तुतिः क्रियते तस्याकाशतत्त्वाधिष्ठिततत्वेन दिविभवमिति व्युत्पत्तिजन्यप्रतीत्यर्हत्वात् 'भवलिङ्गाय

नम" इत्यनेन "अप एव ससर्जादौ तासुबीजम-वासृजत्। तदण्डमभवद्धैमं सहस्रांशुसमप्रभ"मिति मनूक्तदिशा स्थित्युपादानशक्तिविशिष्टजलतत्त्वाधिष्ठितगुरुलिङ्गस्यस्तवः क्रियतेभवपद मन्तर्भावितण्यर्थतया भावयतीत्यर्थकं बोध्यम्। तदाह "ज्येष्ठा जलमयी तत्रस्थित्युपादानरूपिणी। भवस्तदीशस्य ज्येष्ठो ज्येष्ठा तच्छक्तिरीरिते"ति अत्र जलतत्वस्य ज्येष्ठत्वम् "अप एव ससर्ज्जादा"विति पूर्वोक्तसृष्टिमनुसृत्य बोध्यम्। "सर्वलिङ्गाय नम" इत्यनेन पृथिवीतत्त्वाधिष्ठितमाचारलिङ्गं स्तूयते "शिवलिङ्गाय नमः ज्वललिङ्गाय नमः परमलिङ्गाय नमः आत्मलिङ्गाय नमः"इति एषामपिमन्त्राणां शिवलिङ्गचरलिङ्गमहालिङ्गभावङ्गिस्तुतिरूपत्वं सिद्धान्तशेखरवाक्योपष्टम्भेन मूल एवदर्शितं द्रष्टव्यम् दीक्षाकाले बाह्यलिङ्गधारणंप्रत्यक्षं अन्येषां लिङ्गानां भावनारूपेण धारणं गुरूक्तानुसारेण शिष्यैः क्रियत इत्येतत् पद्धतौ शैवागमेच स्पष्टम् सर्वेषां लिङ्गानां धारणं "सर्वलिङ्गं स्थापयती"त्यनेन बोध्यते अत एव सर्वपदस्य स्वारस्यमिति स्थाधातोर्धारणार्थकत्वाभ्युपगन्तृशैवागमस्य पन्था बोद्धव्यः। एवमस्मिन् प्रकरणे आध्यात्मिकान्येव चरलिङ्गान्यनूद्य सर्वलिङ्गं स्थापयतीत्यनेन स्थापनाविधेरवगम्यमान-

तया विध्यर्थवादयोस्सामानाधिकरण्यानुरोधेन शरीरधार्यमाणलिङ्गविषयकत्वमेव न्याय्यम् ।

"वैदोवा प्रायदर्शनादिति" निषादस्थपतिं याजयेदित्यत्र लक्षणानाश्रयणरूपोपक्रमलब्धलाघवानुरोधेन कर्मधारयमेवाश्रित्यानधिकारिण्यपि वैदः कल्प्यते एवमिहाप्युपक्रमे ऊर्द्ध्वलिङ्गाय नमः हिरण्यलिङ्गाय नमः इत्यादिना शरीरान्तर्वर्त्ति प्राणलिङ्गादीनां प्रस्तूयमानतया सर्वलिङ्गवाक्यस्य स्थावरलिङ्गविषयकत्वे षड्विधलिङ्गेषु प्रबल उपक्रमोविरुध्येत ।

न च एतत्सोमस्य सूर्यस्येति पूर्वोक्तनमस्कारपरामर्शकैतच्छब्देन सूर्यसोमनमस्काराभिधानात्प्रकरणविभेद इति वाच्यम् ।

न चैतत् सोमस्येतीति एतत्पदेन पूर्वोक्ता नमस्कारा गृह्यन्ते निधनपतये नम इत्यादि मन्त्रैः-कृता नमस्काराः सूर्याचन्द्रमसोस्सन्तीत्यर्थं भ्रान्त्या प्रतिपद्य प्रकरणविरोधं शङ्कते न चेत्यादिना, वस्तुतस्सोमस्येत्यस्योमया सहितस्येत्यर्थः सूर्यस्येत्यस्य च सूर्यमण्डलान्तर्वर्त्तिनः शिवस्वरूपस्य परमा-

त्मन इत्यर्थः तदुक्तमन्तर्यामि ब्राह्मणे य आदित्ये-
तिष्ठन्नादित्यमन्तरोयमयति यमादित्यो नवेद यस्या
दित्यः शरीरमिति नास्ति प्रकरणविरोध इतिभावः।

उपक्रमोपसंहारयोः शिवपरत्वनि-
श्चयेन मध्ये सोमसूर्यनमस्काराभिधा-
ने सन्दर्भविरोधापत्या सोम एकेभ्यः
पवतेघृतमेकमुपासते इत्यत्रैव उमया
सहितः स्सोम इति व्युत्पत्या सूर्यस्य
सूर्यमण्डलान्तर्वर्तिनः सोमस्य लिङ्ग-
रूपशिवस्येत्यर्थावश्यं भावात्। उक्त-
रीत्या सर्वलिङ्गवाक्यस्य शरीरधार्य-
लिङ्गपरत्वे औदुम्बरो यूपोभवत्यूर्ग्वा
उदुम्बर ऊर्क्पशवऊर्जैवास्माऊर्जं पशू-
नाम्नोत्यूर्जोवरुध्या इत्यत्रैवार्थवाद-
वैयर्थ्यभीत्या विधिकल्पनमपि संग-
च्छतइति॥

औदुम्बरो यूपो भवतीति, अयमर्थः उदुम्बर-

वृक्षसम्बन्धीयूपः क्रियते किमर्थमित्यत आह 'ऊर्ग्वै इत्यादि' 'वै' यतः 'उदुम्बरः' ऊर्ग्रूपः बलरूपः अन्तस्सार इति यावत् पशवोऽपि अन्तःसारा भवन्ति सारवद्वस्तुना सारवद्वस्तु प्राप्नुयादित्याशयात् औदुम्बररूपेणसारवद्वस्तुना अन्तःसारान् पशून् प्राप्नोति किमर्थमित्याह ऊर्जावरुध्यैदुग्धादिद्वारा बलप्राप्त्यर्थमित्यर्थः एतदर्थवादबलात् औदुम्बरो यूपो भवतीत्यत्र लट्प्रत्ययसत्वेऽपि लिङर्थकर्त्तव्यतायाः कल्पनं भवति। एवं सर्वलिङ्गं स्थापयतीत्यत्र लिङ्लोडादीनामभावेप्युक्तानुवादबलादेवलिङ्गधारणविधिः कल्प्यते ।

अथैवमप्यस्य न नित्यविधित्वं । बाह्यमाभ्यन्तरं चैव मुनिभिर्मोक्षकांक्षिभिरिति प्रागुदाहृतसिद्धान्तशिखामणिवचनेन फलश्रवणादिति चेन्नैवं। नित्ये संध्यामुपासते ये तु सततं संशितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकमनामयमित्यार्थवादिकफलश्रवणेनसन्ध्योपासनस्याऽनित्यतानापत्तेः।

ननित्यविधित्वमिति, मुनिभिर्मोक्षकाङ्क्षिभिरित्यधिकारिविशेषणेन मोक्षकाङ्क्षारहितस्य लिङ्गधारणाप्राप्तेः काम्यविधित्वस्यैव सिद्धेरिति भावः। सन्ध्यामुपासत इति "य एता रात्रीरुपयन्ति प्रतितिष्ठन्तीहते इति रात्रिसत्रार्थवादोक्तप्रतिष्ठाफलस्याधिकारिविशेषणत्वेन रात्रिसत्त्रविधौ काम्यविधित्ववत् सन्ध्यामुपासते येतु इत्यर्थवादोक्तविधूतपापत्वब्रह्मलोकप्राप्तिकामस्य सन्ध्याविधावधिकारित्वप्राप्त्या सन्ध्याया अपि नित्यत्वं न सिद्ध्येत्।

यदि तत्र अनुपास्य त्रिकालेषु संध्यामन्नादिभुग्भवेत्। श्वानयोनिशतं गत्वा चाण्डालः कोटिजन्मसु। इत्यकरणे प्रत्यवायस्मरणान्नित्यत्वमुच्यते प्रकृतेपि समानं। भक्तस्याबिभ्रतोलिङ्गं यावत्प्राणविधारणं। अमांसभक्षणं तावदन्नेन रचितं भवेदिति वातुलादिवचनैरकरणे प्रत्यवायाभिधानात्।

अनुपास्य त्रिकालेष्वित्यादिना अकरणे प्रत्यवायस्मरणान्नित्यत्वमिति चेत् भक्तस्याविभ्रतो लिङ्गमित्यादिना लिङ्गाधारणेपि प्रत्यवायोक्तेस्तस्यापि नित्यत्वं निर्विवादं सिध्यतीत्याह, प्रकृतेपि समानमिति ।

बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरेदिति । इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत् । वेदार्थोयं स्वयं ज्ञातस्तत्राज्ञानं भवेदपि । ऋषिभिर्निर्णिते तस्मिन्काशङ्का स्यान्महात्मनां इत्युक्तत्वेन अस्याः श्रुतेरुक्तार्थे उपबृंहणमप्यस्ति तथाहि लिङ्गपुराणे ॥ वेदेषु शास्त्रसंघेषु पुराणेष्वागमेषु च ब्राह्मणस्य समाख्यातं लिङ्गधारणमुत्तमं इत्युपक्रम्ययजुरप्याह सर्वं वैलिङ्गं स्थापयतीति च । तस्माद्धार्यं महालिङ्गं पाणिमन्त्रेति मन्त्रतः । पाणौ लिङ्गं

विनिक्षिप्य दीक्षाकाले गुरुश्शिवं। येन स्तुवर्तितन्मन्त्रंपाणिमन्त्रंवदन्तिहि । पवित्रत्वान्महेशस्य शिवस्य प्रतिपादनात् । पवित्रकरणात्पुंसां पवित्रमिति कथ्यते अतस्सर्वेषु कालेषु धारयेल्लिङ्गमुत्तमं गच्छंस्तिष्ठन्स्वपन् जाग्रन्नुन्मिषन्निमिषन्नपि । शुचिर्वाप्यशुचिर्वापि लिङ्गं सर्वत्र धारयेत्। लिङ्गधारी सदा शुद्धो निजलिङ्गं मनोहरं । अर्चयन् गन्धपुष्पाद्यैः करपीठे समाहितः। नित्यानि कर्मबृन्दानि तथानैमित्तिकानि च। शिवार्पणधिया कुर्यात्सम्यग्ज्ञानाभिवृद्धय इति ।

सर्वलिङ्गं स्थापयतीति विधिः स्थावरलिङ्गस्थापनविषयको वा शरीरेलिङ्गधारणविषयको वेति संशये "इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेदित्या"-दिभारतोक्तिभिः सर्वत्रवेदार्थसंशये इतिहासपुराण-

सहायेन निर्णयकरणस्यौचित्यात्। स्वगृहीतलिङ्गधारणपक्षे अनुकूलं लिङ्गपुराणं दर्शयति "वेदेषु शास्त्रसंघेषु पुराणेष्वागमेषु च। ब्राह्मणस्य समाख्यातं लिङ्गधारणमुत्तम"मित्यादिना अत्र कतिपयैः श्लोकैर्लिङ्गधारणकर्त्तव्यतामुक्त्वा तत्र प्रमाणरूपेण इदमेव वाक्यं लिङ्गपुराणे दर्शितम् "यजुरप्याह सर्वं वै लिङ्गं स्थापयतीति अयं लेखः अत्रत्य लिङ्गपुराणीयवाक्यानां सर्वलिङ्गं स्थापयतीति श्रुतेश्च उपबृंह्योपबृंहणभावे निर्विवादं परमं प्रमाणं सिद्धं भवतीति द्रष्टव्यम् एवं स्थिते उपबृंहणीभूतात्रत्य पुराणवाक्ये "पाणौ लिङ्गं विनिक्षिप्य दीक्षाकाले गुरुः शिवम्। येन स्तुवति तन्मन्त्रं पाणिमन्त्रं वदन्तिहि" पवित्रत्वान् महेशस्य शिवस्य प्रतिपादनात् पवित्रकरणात् पुंसां पवित्रमिति कथ्यते। इति पाण्यधिकरणकपूजाकरणत्वेन पाणिमन्त्रशब्दनिर्वचनात् पाणिकरणकपूजाकाले पठ्यमानत्वादि विषयको विवादः पराहतो वेदितव्यः। एवं लिङ्गपुराणेन श्रुत्या च लिङ्गधारणस्य कर्त्तव्यत्वं व्यवस्थाप्य स्कान्दीयशङ्करसंहितावाक्येनापि तत् साधयति।

स्कान्देशङ्करसंहितायामपि ।

योहस्तपीठे निजलिङ्गमिष्टं विन्यस्य

तल्लीनमनः प्रचारः । बाह्यक्रियासङ्कु-
लनिःस्पृहात्मासम्पूजयत्यंगसवीरशै-
वः । तद्देवहस्ताम्बुजपीठमध्ये निधाय
लिङ्गं परमात्मचिन्हं । प्रपूजयेदैक्यधि-
योपचारैर्नरस्तुबाह्यान्तरभेदभिन्नैः ।
बाह्यपीठार्चनादेतत्करपीठार्चनं वरं ।
सर्वेषां वीरशैवानां मुमुक्षुणां निर-
न्तरं । इत्यादिना पाणिमन्त्रं पवित्र-
मिति वाक्यविहितपाण्यधिकरणकपू-
जाश्रेष्ठ्यमुक्त्वा न तस्य सूतकं वत्स प्रा-
णलिङ्गाङ्गसङ्गिनः । जननोत्थं मृतोत्थं
वा विद्यते परमार्थतः । जातके मृतके
वापि न त्याज्यं शिवपूजनं । इति
लिङ्गधारणेनयावज्जीवदीक्षितस्याशु-
चिकालेपिशिवपूजादिकंकर्तव्यमित्यु-
क्तम् । देवार्चनादिकं कर्म कार्यं

दीक्षान्वितैस्सदा । नास्त्यशौचविधि-
स्तेषां सूतकं च महात्मनां । शैवं देवा-
र्चनं यस्य यस्य चाग्निपरिग्रहः । ब्रह्म-
चारियतीनां च शरीरेनास्ति सूत-
कं। इत्यादित्यपुराणेपितथैवाभिहित-
मिति ॥

'योहस्तेति' निजमिति नियमेन ध्रियमाणलि-
ङ्गमेवेष्टलिङ्गपदेनोच्यते तल्लीन मनःप्रचारः तस्मिन्नि-
ष्टलिङ्गे लीनःमनः प्रचारः मनसः सर्वाक्रिया यस्य क्रिया
सङ्कुलं क्रियासमूह ऐक्यधिया लिङ्गपरमात्मनोरैकात्म-
त्वबुध्या प्राणलिङ्गाङ्गसंगिनः प्राणलिङ्गस्य संगः
अङ्गे वर्त्तत यस्येति व्याख्येयम् ।

नन्वशुचिकालेपि शिवपूजाकरणे
कर्मान्तरानुष्ठानस्यतदापत्तिरितिचे-
न्नैवं । नित्य सङ्कल्पितसंध्यावन्दना-
दिकालीनसूर्याद्युपस्थानविनियुक्तमि-
त्रस्येत्यादिमंत्रोच्चारणस्यनित्योपास-
नीयवैश्वदेवादिविनियुक्तमन्त्रपाठ-

स्यदर्शपूर्णमासेष्टिविनियुक्तवेदपाठ-स्यच"ननिरोधस्त्वनध्याये होममन्त्रे-षुचैवहि । नैमित्तिकेऽस्त्यनध्यायो-ब्रह्मसत्रं हि तत्स्मृतमिति" मनुस्मृत्य-नुरोधेन अनध्ययनकालकर्तव्यत्वेऽपि न याव द्वेदाध्ययनस्य कर्त्तव्यत्वम् त-थारीत्या यावज्जीवसङ्कल्पित शिव-पूजाकरणेप्यऽशुचिकाले न कर्मान्तरा-नुष्ठानापत्तिरिति ।

कर्मान्तरानुष्ठानेति, स्मार्त्तकर्मप्रतिवन्धकसूत-कस्य शैवेष्वभावे सर्वाण्येव कर्माणि प्राप्नुवन्तीति प्रश्नाशयः समाधत्ते 'नित्येति' "नैत्यिके नास्त्यनध्या-योब्रह्मसत्त्रं हि तत् स्मृतम्" इति मनुस्मृत्यनुज्ञानात् सन्ध्यावन्दनकालप्राप्तसूर्यास्युपस्थानमन्त्राणां वैश्वदे-वादिमन्त्राणां दर्शपूर्णमासेष्टिहोममन्त्राणाञ्चानध्याये पाठप्रचारेपीतरवेदानध्ययनवत् यावज्जीवसङ्कल्पि-तशिवपूजाया इव अशुचिकाले कर्मान्तरानुष्ठानस्या-ऽप्राप्तेः एवञ्च "न तस्य सूतकं यत्से" त्यादिवाक्य-मपि शिवपूजामात्रविषयकं मन्तव्यम् महासङ्कल्पप-

रिपालनावश्यकत्वमेवैषामशौचनिषेधे बीजमित्याभाति।

नन्वास्ताम् तावन्नित्यत्वम् पाण्यधिकरणकशिवपूजायाः। तथापि वामहस्तस्यात्यन्तापकृष्टत्वेन "तत्रतत्करणमयुक्तमिति चेन्न अञ्जलिनावा पिबेदखर्वेणपात्रेणेति" श्रुत्या पानकरणाञ्जलिघटकत्वेनदक्षिणहस्तस्येव अस्याप्युपयोगविधानेन सकलवैदिकजनावश्यकाग्निमुखविनियुक्तेऽञ्जलौ पूर्णपात्रमानयतीति श्रुत्या पूर्णपात्राधाराञ्जलिप्रविष्टवामहस्तस्योपयोगस्यावश्यम्भावेन। उरसा शिरसा दृष्ट्या मनसा बचसा तथा। पद्भ्याम् कराभ्याम् कर्णाभ्याम् प्रणामोष्टाङ्ग उच्यते। इति बैाधायनेन रुद्रन्यासे करद्वयस्य परमशिवनमस्कारयोग्यत्वप्र-

दर्शनेन च पीठार्चकैरपि करद्वयेन पुष्पाञ्जलिप्रदानाच्च तत्र शिवपूजाकरणे दोषाभावात् ।

'तत्र तत्करणमिति' वामहस्तरूपे पीठे शिवपूजाकरणमित्यर्थः चेन्नेति अञ्जलिना पिबेत् अञ्जलौ पूर्णपात्रमानयतीत्यादिविधिभिर्बहुषु कर्मस्वञ्जलिघटकत्वेन वामहस्तस्य विनियुक्तत्वेन सर्वकर्मानर्हत्वस्य वामहस्तेवक्तुमशक्यतया विहितपूजाधिकरणत्वस्याश्रद्धेयतायां मानाभावादिति भावः ।

ननु यद्यपि भवदुक्तरीत्या सर्वलिङ्गंस्थापयतीत्यस्यलिङ्गधारणपरत्वम् सिध्यति तथापिवेदार्थप्रणेतृभिर्विद्यारण्यैस्तत्परत्वेनाव्याख्यानात्सन्देहइतिचेत्तदेतद्बधिरकर्णजापमनुकरोति तैरव्याख्यातत्वेऽपि कालहस्तिदीक्षितमञ्चसपण्डिताराध्यप्रभृतिभिस्तत्परत्वेनव्याख्यानात् विद्यारण्यस्वामिभिस्तुप्रकृतार्थेऽनुप-

योगादन्यथाव्याख्याने दोषापाताच्चोपेक्षितम् इतरथादुर्गामन्त्राणामपि तैरव्याख्यातत्वेन समयमततत्त्वाऽऽवेदिनाम् शङ्कराचार्याणाम् दुर्गापूजाविनियोगोप्यसङ्गत एव स्यात् किञ्चसकलवेदार्थधुरन्धर भगवद्बादरायणाचार्यैरेवास्याः श्रुतेरुक्तार्थानुसारेण लिङ्गपुराणादावुपबृंहितत्वेनवेदागमप्रमाणेऽत्र परशिवेनापिसिद्धान्त शिखामण्यादावुपबृंहितत्वेनचसन्देहायोगादिति सर्वमनवद्यम् ।

विद्यारण्यैरिति, । सायणाचार्यैरित्यर्थः । 'बधिरकर्णजापमिति, तद्वत्स्वसाध्यानुपयुक्तं भवतीत्यर्थः उपदर्शितलिङ्गपुराणादिभिः प्रकृतमन्त्रोपबृंहकैरस्मदभिप्रेतार्थपरत्वसिद्धौपुरुषान्तरकर्तृकान्यथाव्याख्यानस्याकिञ्चित्करत्वादितिभावः ।

ॐ अत्रैवोपनिषदिमंत्रान्तरेणापितत्सिद्धिः । ॐ नमोब्रह्मणे धारणं

मे अस्त्वनिराकरणम् धारयिताभूयासम् कर्णयोः श्रुतम् माच्योढ्वम् ममामुष्यओमिति ।

मन्त्रान्तरेणेति, ॐ नमोब्रह्मणेधारणम्मेऽस्त्वित्यादिनेत्यर्थः धारणक्रियायाः सकर्मकत्वेन कर्मविशेषस्यापेक्षायां ब्रह्मणः सन्निहितत्वेन तस्यैव कर्मत्वेन ग्रहीतुमौचित्यात् तस्य च निरवयवतया धारणानर्हतया तदभिन्नत्वेन शास्त्रबोधितलिङ्गधारणएवायं विधिः पर्य्यवस्यति धारणमेव विशिनष्टि अनिराकरणमिति अनादराभाववदित्यर्थः । नित्योपादेयं ब्रह्मानिराकरणपदार्थइति स्वयं व्याख्यास्यत्यग्रे कर्णयोः श्रुतमित्यस्य श्रुतिस्मृतिपुराणैः स्तूयमानत्वेन श्रुतमित्यर्थः माच्योढ्वम् च्युङ्च्यवने लुङः मध्यम पुरुषस्यैकवचनस्थाने व्यत्ययेन बहुवचनम् शरीराच्च्युतम्माभूदित्यर्थः 'ममामुष्येति' सम्बन्धसामान्ये षष्ठी परलोकंगतादपि मत्तः माच्योढ्वमिति पूर्व्वेणान्वितम् ।

नन्वनेनमन्त्रेण न लिङ्गधारणसिद्धिः मेधारणमस्तु अहन्धारयिताभूयासमिति वाक्यद्वयेपि विशेषसमर्पकपदाभावेन धारणमात्रप्रतीतेः ।

नन्वनेन मन्त्रेणेति, धारणं भेष्टित्वत्यत्र सामान्यतः प्रतीताया धारणक्रियायाः कर्मविशेषानुपादानात् लिङ्गमात्रविषयकत्वं न सम्भवतीति शङ्कितुराशयः ।

**न च देवतान्तरधारणे प्रमाणाभावादाचाराभावाच्च परिशेषाल्लिङ्गधारणसिद्धिरिति वाच्यम् ।**

'परिशेषादिति' धारणक्रियायाः किञ्चित्कर्मकत्वावश्यकत्वेनाप्रसिध्यादिना देवतान्तरधारणे निराकृते परिशिष्टतया लिङ्गकर्मकत्वमेव सिध्यतीतिभावः ।

**देवतान्तरधारणाप्रसिद्धावपि नारायणप्रतिनिधित्वेन शङ्खचक्रादिधारणस्यरामानुजमतसिद्धत्वेनप्रामाणिकत्वेनचतस्यैवधारणप्रतियोगित्वेनान्वयसम्भवात् ।**

नारायणप्रतिनिधित्वेनेति, नारायणस्थानीयत्वेनेति यावत् नारायणरूपत्वबुध्या शङ्खचक्रादिधारणं कर्त्तव्यमिति रामानुजाचार्याणां मतम् । प्रामाणि-

कत्वेनेति प्रामाणिकतया रामानुजैस्स्वीकृतत्वेनेत्यर्थः अतएव 'चक्राङ्कितततनुर्यत्र न तत्र दिवसम्वसेदि'' त्युत्तरखण्डनग्रन्थेन न विरोधः ।

नच अनिराकरणमित्यस्योत्पादविनाशशालित्वेन निराकरणम् हेयप्रपञ्चम् तन्नभवतीत्यनिराकरणम् उपादेयम् ब्रह्मेत्यर्थकत्वेन तस्यैवधारणान्वये अर्थाल्लिङ्गधारणसिद्धिरिति वाच्यम् ।

अर्थाल्लिङ्गधारणसिद्धिरिति, उत्पादविनाशशालित्वाभावरूपानिराकरणपदार्थस्य ब्रह्मण्येव सम्भवेन तदभिन्नस्य लिङ्गस्यैव धारणं प्राप्नोतीतिभावः ।

एतादृशावयवशक्त्या निराकरणपदोस्याप्यत्वस्य मतान्तररीत्या नारायणस्यतद्धर्मणां च वक्तुं शक्यत्वेन तेषामपि धारणान्वयसिद्धावुक्तदोषानपायात् ।

'मतान्तररीत्येति' रामानुजमतादिषु नाराय-णस्य शङ्खचक्रादीनां च ब्रह्मत्वोपगमेनोक्तयुक्तेः सा-धारण्यादितिभावः ।

किञ्च "विभूतिर्यस्य नोभाले क-ण्ठेरुद्राक्षमालिका । मुखे षडक्षरोम-न्त्रस्तन्त्यजेदन्त्यजं यथा ॥ उद्धूलनं त्रि-पुण्ड्रञ्च मनसापिनलङ्घयेत् । श्रुत्या-विधीयतेतस्मात्तत्यागीपतितोभवेत् ॥ इति भूतिरुद्रक्षधारणाकरणे प्रत्यवा-यश्रवणेन तयोरेववात्र धारणप्रतियो-गित्वेनान्वयः स्वीक्रियते । धारयिता भूयासमित्यत्र विध्यसम्भवप्रयुक्ताशीर्लि-ङ्त्वेन विधायकत्वासम्भवात् न वा विधिप्रयोजकरूपसत्त्वम् सर्वलिङ्गवा-क्येनान्यथासिद्धत्वादिति पूर्वः पक्षः ।

'किञ्चेति, विभूतिरुद्राक्षमालिकाषडक्षरमन्त्रा-णाञ्च धारणस्य शैवसिद्धान्तेपि नित्यतया विहि-तत्वेन तेषामपि दर्शितमन्त्रोक्तधारणप्रतियोगित्वं

प्राप्नोति तावतापि लिङ्गधारणं नसिद्ध्यत्येव भूयास-
मित्यत्राशीर्लिङ्प्रदर्शनेन विधित्वमपि न सम्भवती-
त्याह 'विध्यसम्भवश्चेति' 'नवाविधिप्रयोजकेति,
विधिप्रयोजकरूपञ्चाप्राप्तत्वरूपं बोध्यम् तदेवाह
'अन्यथासिद्धत्वादिति ।

अत्रोच्यते अनिराकरण मुपादेयम् यल्लिङ्गस्वरूपम् ब्रह्म तद्धारयिता भूयासमित्येवार्थः स्वीक्रियते यत्तु नारायण तद्धर्मणामप्यवयवशक्त्या ऽनिराकरणत्वमिति तदयुक्तम् "सर्वमिदम् ब्रह्मविष्णुरुद्रेन्द्रास्तेसंप्रसूयन्त" इत्यथर्वशिखादिवाक्यैः । त्रयस्तेकारणात्मानोजाताास्साक्षान्महेश्वरात् । पित्रानियमिताः पूर्वं त्रयोपित्रिषुकर्मसु ॥ ब्रह्मासर्गेहरिस्त्राणे रुद्रस्संहरणे पुनः, । इत्यादिशिवपुराणवचनैश्च नारयणस्योत्पत्तिश्रवणेन तदीयशङ्खचक्रादेश्च

चक्रांकिततनुर्यत्र न तत्र दिवसंवसेत् यदितिष्ठेन्महापापीसहस्त्रब्रह्महाभवेत् अज्ञानादथवालोभाद्रागतोवासुदर्शनम् । धत्तेकुलघ्नन्तं दृष्ट्वा सचैलम् स्नानमाचरेत् इत्यादिना चनिराकृतत्वेन अनिराकरणपदोपस्थाप्यत्वाभावात् विवेचयिष्यते चेदमुपरिष्टादस्माभिरस्य तु "नकारणम् कारणानान्ध्याता ध्याताकारणन्तुध्येय इत्युत्पत्यभावेन" पूर्वोक्तनारायणादिजनकत्वध्येयत्वादिप्रदर्शनेनानिराकरणपदवाच्यत्वादुक्तरीत्यालिङ्गाकृतिकत्वेन च तस्यैवधारणप्रतियोगित्वेनान्वयइति ।

'अत्रोच्यतइति' ब्रह्मविष्णुरुद्रादीनां सदाशिवादुत्पत्तिश्रवणेन शङ्खचक्रादीनां च "चक्राङ्कित तनुर्यत्र न तत्र दिवसं वसेदि"त्यादिना निन्दितत्वेन नास्तितेषामनिराकरणपदार्थत्वयोग्यतेत्युत्तरग्रन्था-

न्वयः विभूत्याद्याश्रितस्य पूर्वपक्षस्य तु समाधानमग्रे करिष्यति अस्यतु न निराकरणमिति, अस्यसदाशिवस्य पूर्वोक्तनारायणजनकत्वध्येयत्वेत्युत्तरेणा-न्वयः कारणानां ब्रह्मादीनामपि स कारणं 'धाता-ब्रह्मा 'ध्याता, ध्यानकर्त्ता 'कारणं, परमकारणं परमे' अक्षरः ध्येय 'इत्यर्थः न केवलमनिराकरणपदस्वारस्यादेव लिङ्गस्य धारणप्रतियोगित्वम् अपितु ममामुष्यत्रोमिति वाक्यशेषे तस्यामेव श्रुतौ स्फष्टमेव तदुक्तमस्तीत्युपपादयति ।

वस्तुतस्त्वित्यादिना ।

वस्तुतस्तु धारयिता भूयासमिति सामान्यतोधारणं विधाय धार्यं किमित्याकाङ्क्षायाम् ममामुष्यत्रोम् इत्योङ्कारवाच्यकेवललिङ्गस्यविधानात्तस्यैव धारणेऽन्वयः तथा च अनिकराणमुपादेयम् वेदशास्त्रप्रतिपाद्यत्वेन कर्णयोःश्रुतम् ओं ओङ्कारपदवाच्यम् यच्छिवस्वरूपं लिङ्गम् तद्धारयिताभूयासमित्यक्षरार्थः ।

'न लिङ्गार्थकत्वसिद्धिरिति, मङ्गलार्थकत्वाद्वि-ष्णुवाचकाकार प्रकृतिकत्वाच्चोङ्कारस्येति शङ्कितुरा-शयः अकारं ब्रह्माणमित्यादि तापनीयशाक्यशिव-पुराणवचनाभ्यां लिङ्गपुराणीय विष्णुस्तोत्रादिभिश्च मात्रात्रयाधारभूतार्धमात्राभागेनोङ्कारस्य परमशिव-वाचकत्वबोधनात्लिङ्गार्थकत्वंसिध्यतीत्युत्तरग्रन्था-शयः ।

ननु ओङ्कारश्चाथशब्दश्चद्वावे-तौ ब्रह्मणःपुरा । कण्ठं भित्वाविनिर्यातौ तस्मान्माङ्गलिकावुभाविति मङ्गलार्थ-कत्वेन अकारोवै सर्वावागित्यकारस्य सर्ववागन्तर्गतोङ्कारप्रकृतित्वसिद्धाव-कारस्य विष्णुवाचकत्वेन च नलि-ङ्गार्थकत्वसिद्धिरोङ्कारस्येति चेन्नैवम् । अकारं ब्रह्माणम् नाभौ उकारं विष्णुं हृदये मकारं शर्वं भ्रूमध्ये ओङ्कारं सर्वे श्वरम् द्वादशान्तइति तापनीयोपनि-षद्वाक्येन एवंतिसृभिरेवैतन्मात्राभि-

रखिलन्निरधात्त्रभिधायशिवात्मानम्
बोधयत्यर्धमात्रयेतिशिवपुराणवचने-
न लिङ्गपुराणे विष्णुकृतशिवस्तोत्रे ॥
सर्वज्ञायनमस्तुभ्यमोङ्काराय नमो नम
इत्यनेन चार्धमात्रास्वरूपोङ्कारस्य पर-
मशिववाचकत्वाभिधानात् ।

न चाकारप्रकृतिकोङ्कारस्य अ-
कारवाच्यविष्णुवाचकत्वमितिवाच्यम्
अशेषवाक्यानामकारप्रकृतिकत्वेनत-
द्वाच्येनैववाच्यसिद्धौशक्तिमात्रोच्छेदा-
पत्तेःअकारोवैसर्ववागित्यस्योङ्कारेण-
सर्वावाक्सन्तृणेतिवतूलावकत्वात्
अन्यथापूर्वपूर्ववर्णानामुत्तरोत्तरवि-
नाश्यत्वेनाकारादित्रयस्यार्धमात्रादि
लीनत्वेन तदात्मतापत्त्या तद्वाच्यशि-
ववाचकत्वमिति वैपरीत्यापत्तेः॥ अत

एव मङ्गलार्थकत्वमपिसिध्यति ॥ समे धयतिशंनित्यं सर्वार्थानामुपक्रमे । शिवमिच्छन्मनुष्याणां तस्माद्देवःशिवः स्मृतः ॥ समाभवन्ति मेसर्वेदानवाश्च सुराश्चये । शिवोस्मिसर्वभूतानांशिवत्वं तेनमेसुराइति कर्णपर्वणि शिवपद निरुक्त्या शिवस्यसर्वमङ्गलप्रदत्वनिश्चयात् ।

शक्तिमात्रोच्छेदापत्तेरिति विष्ण्वतिरिक्तेऽर्थेकस्यापि पदस्य शक्तिर्नसिद्ध्येदितिभावः कातर्ह्यंकारोवैसर्वावागित्यस्य गतिरित्यत आह 'स्तावकत्वादिति सन्तृणेत्यस्य व्याप्तेत्यर्थः प्रकृतित्वेन लयाधिष्ठानत्वेन च तिसृणां पूर्वासांमात्राणाम् अर्धमात्रायां लीनत्वेनार्धमात्रावाच्यपरमात्मतत्वमात्रवाचकत्वं तासामपि सिद्ध्येदित्याह वैपरीत्यापत्तेरिति "ओंकारश्चाथशब्दश्चे"त्युक्तमोङ्कारस्य मङ्गलार्थकत्वन्तु शिववाचकत्वेऽत्यन्तमनुकूलमित्याशयेनाह 'समेधयतिशमित्यादिना, मङ्गलवर्धकत्वात् मङ्गलप्र-

दत्वात् मङ्गलरूपत्वाच्च शिवस्य तदर्थकोङ्कारे माङ्ग-लिकत्वस्यात्यन्तमौचित्यात् ।

नचोङ्कारस्य शिववाचकत्वेऽपिलि-ङ्गपरत्वेकिमायातमिति वाच्यम् । लि-ङ्गेसुषुप्तिरिति पूर्वोदाहृतहंसोपनि-षद्वाक्येन शिवस्यैव लिङ्गरूपत्वाव-सायात् ओंकारम् लिङ्गमाख्यातमि-त्यागमवचनेन साक्षादेवतत्परत्वाच्च ।

'किमायातमिति' ओङ्कारस्य लिङ्गपरत्वं न सिध्यतीतिभावः लिङ्गेसुषुप्तिरिति, हृत्पुण्डरीकाव-यवदलेषुचरतोजीवस्यलिङ्गप्राप्तौपरमात्मलयापरप-र्यायायाः सुषुप्तेः प्रदर्शनाल्लिङ्गस्य परमात्मरूपत्वाव-सायात् तथानशंक्यमिति भावः भूति रुद्राक्षधारणस्य लोकशास्त्रसिद्धतया तयोरेव धारणप्रतियोगित्वं क-स्मान्नेति पूर्वमाशङ्कितं तन्निराकरोति । 'यच्चोक्तमि-त्यादिना'

यच्चोक्तं भूतिरुद्राक्षयोरेवधार-णेऽन्वय इति तत्रविकल्पयामः प्रा-धान्येनान्वयोवा लिङ्गधारणान्तरी-

यकत्वेनवा नाद्यः तदुपस्थापकपदाभावात् नहि भूतिरुद्राक्षोपस्थापकओंकारइतिकुत्रापि प्रसिद्धम् नद्वितीयः इष्टापत्तेः केचित्तुअनिराकरणमित्यनेन भूतिरुद्राक्षयोर्ग्रहणं ओमितिलिङ्गस्य तथा च त्रयाणामपिधारणे प्राधान्येनान्वय इत्याहुः ।

लिङ्गवाचकम् ओमितिपदमस्ति भूतिरुद्राक्षवाचकन्तुकिमपिनास्तीत्याह 'पदाभावादिति' 'इष्टापत्तेरिति' अविरुद्धोक्तिनिराकरणप्रयोजनाभावादितितात्पर्यम् ।

यदप्युक्तम् भूयासमित्यत्राशीर्लिङ्त्वेन न विधिसंभव इति तन्मन्दं मेधावीभूयासमहमेकः प्रथममासमित्यत्रेवतत्संभवात् नच तत्र विधिप्रयोजकरूपसत्त्वेन तत्संभवेप्यत्र तदभावान्नविधिसंभवइतिवाच्यं । अत्रापि धा-

रयिताभूयासमिति विहितलिङ्गधारणं सर्वलिंगंंस्थापयतीत्यनेनानूद्यपाणिमंत्रमित्यधिकरणमात्रविधिरित्यङ्गीकारे अन्यथासिद्ध्यभावेन विधिसंभवात् ।

अन्यथासिद्ध्यभावेनेति सर्वलिङ्गंस्थापयतीत्यनेन विहितलिङ्गधारणस्य प्राप्तत्वादप्राप्तत्वरूपविधित्वप्रयोजकरूपं नास्तीतिभवदभिप्रायः परं धारयिताभूयासमितिविहितलिङ्गधारणं सर्वलिङ्गं स्थापयतीत्यनेनानूद्य पाणौमन्त्रमित्यधिकरणमात्र विधाने विधित्वप्रयोजक रूपमस्त्येवेति परेणोच्यत इत्यालोचनीयम् ।

'मेधावीभूयासमिति' मेधायाः प्रार्थ्यमानत्वेपिपदसामर्थ्यरूपलिङ्गेनानेन मन्त्रेणात्मानं मेधाविनं कुर्यादिति विधेः कल्पनवत् अहं धारयिताभूयासमित्यत्र लिङ्गबलेनैवानेनमन्त्रेण धारणं कुर्यादिति विधेः कल्पनं भविष्यतीति तात्पर्यम् । अहमासमित्यत्र विधित्वशङ्का गन्धोपि नास्ति तथापीश्वर एव सनातनत्वेन चिन्तनीय इति विधिर्यथाकल्प्यतेतद्वदितिभावः वैपरीत्येपिनास्तिकाचित् क्षतिरित्याह ।

आस्तांवातावदयमर्थवादः तथापिनलिङ्गधारणपरत्वं हीयते कर्णयोःश्रुतमनिराकरणमों लिङ्गमित्यादिनातस्यैवस्मृतिसमर्पणात् उक्तरीत्यादहरं विपापमित्यस्य सर्वलिङ्गं स्थापयतीत्यस्य च बाह्याभ्यान्तरलिङ्गधारणपरत्वेन तत्प्रकरणगत नमो 'ब्रह्मण' इत्येतस्यतदन्यपरत्वायोगाच्चेत्यन्यत्रविस्तरः ।

'आस्तान्तावदिति' 'तथापीति' अस्मिन् कल्पेऽनिराकरणत्व प्रणवरूपत्व बोधनेन धृतलिङ्गस्य गुणस्तुत्योर्लाभादर्थवादत्वं गुणविधित्वं च बोध्यम् 'तदन्यपरत्वेति' प्रकरणबलात् नमो ब्रह्मणइति नमस्कारोपिलिङ्गरूपब्रह्मोद्देश्यक एव ।

उपबृंहितञ्चैतदेवमेव ब्रह्माण्डपुराणे। नमोस्तुब्रह्मणेतुभ्यमाचार्य्याय महात्मने । तन्निराकरणं विश्वं जन्यत्वान्मृत्युनैवहि । अनिराकरणं ब्रह्म-

कारणत्वाच्चिरन्तनं। अनिराकरणं मे-
ऽस्तु धारणं देशिकोत्तम। वेदशास्त्रपु-
राणेषु प्रसिद्धं कर्णयोःश्रुतं। अहं धा-
रयितादेवं भूयासंसर्वकारणं। ब्रह्मवि-
ष्णवादयोदेवा प्रसिद्धाश्चतथाश्रुताः
तेनिराकरणास्सर्वैमृत्युनासर्वशत्रुणा।
मेनिराकरणास्त्वेते नहिधार्य्याः कदा-
चन। नाहंधारयितादेवान्भूयासंम-
ज्जतस्सुरान्। नशक्नुवंतिमांतर्त्तुम् म-
ज्जन्तंमृत्युसागरे। ऊर्ध्वंममेदमोंलिङ्गं
मांचामुष्य समाश्रय इति। स्कान्दे-
कुमारसंहितायां यात्राखण्डे। महा-
तपस्विनांचैव यतीनां योगिनां तथा।
शांभवानां द्विजातीनां शैवानांलिङ्ग-
धारिणां। महापाशुपतानांच मन्त्राम-
व्रतधारिणां। मृत्युंजयरता नांच ब्राह्म-

णानां महात्मनां । पंचाक्षररतानां च मत्प्रीत्याद्विजसेविनां । सर्वेषामपि-सिद्धानांनित्यंदेयंगिरीश्वरलिङ्गधारणा-कं नाम व्रतंमाहेश्वराभिधं । येधारणां प्रकुर्वन्ति ते यांति शिवमन्दिरं । व्रतं पाशुपतं नामशिवलिङ्गार्चनं शुभं । षाट्कालिकं त्रिकालंवा एककालंमहेश्व-रम् ।येपूजयंतिविप्रर्षेतेयांतिशिवमंदि-रमित्यादीन्युक्त्वार्थापोद्वलकान्यनुसंधे-यानीति ।

'उपबृंहितमिति, विस्तरेणव्याख्यातमित्यर्थः मृत्युनेति । "जातस्य मरणं ध्रुवमिति" नियमात् जन्यं यावद्विश्वं मृत्युना निराक्रियते ब्रह्मतुकारणत्वादर्थात् मूलकारणत्वान्नकेनापिनिराक्रियते तस्मात्तदेवानिरा-करणमित्युच्यते अन्यत्सर्वंनिराकरणमित्युच्यते तेनाहं ब्रह्मण एव धारयिता भूयासं नान्येषां देवानामि-त्यर्थः अत्रहेतुमाह 'मज्जतः सुरानिति संसारेस्वयं मग्नाः सुराअन्येद्धुरणं कर्त्तुं कथं शक्ष्यन्तीति तात्पर्यम् अत्र देवान् सुरानिति पौनरुक्तिपरिहारः "वारुणी-

ग्रहणात्सुराः” इति वाल्मीकिरामायणोक्तेः सुर-शब्दस्य यौगिकत्वाश्रयणेन करणीयः ‘माच्चामुष्यस-माश्रयेति’ देशिकम्प्रतिप्रार्थनेयम् अमुष्य ओंङ्कार-लिङ्गात्मकस्य समाश्रयणं मांकारयेत्यर्थः ।

तैत्तिरीयशाखायामेव । “यश्छन्दसामृषभोविश्वरूपः छन्दोभ्योध्यमृतात्संभभूव”समेन्द्रोमेधयास्तृणोतु अमृतस्यदेवधारणोभूयासं । शरीरं मे विचर्षणं जिह्वामेमधुमत्तमा । कर्णाभ्यां भूरिविश्रुतं ब्रह्मणः कोशोसिमेधयापिहितः श्रुतंमे गोपायेति’ मन्त्रेणा-पितदेवसिध्यति । देवधारणोभूया-समित्यत्रदेवशब्दस्य तंदेवतानां परमं-चदैवतमिति तस्माद्देवशिवस्मृत इति च परमशिवेप्रयोगदर्शनात् । देवतां-तरधारणविधायकप्रमाणाभावादा-चाराभावाच्च धारणशब्दस्य कर्तरिल्यु-

ऽन्तत्वेन देवंधरतीत्यर्थे सति अमृतस्यमोक्षार्थं देवधारणोयतो भूयासं अतः इन्द्रः निग्रहानुग्रहसमर्थः स लिङ्गरूपशिवः मामां मेधयास्तृणोतु संयोजयत्विति पूर्वाचार्यैर्व्याख्यातं ।

'यश्छन्दसामृषभइति, यद्यपि पूर्वोऽयन्त्रमन्त्रः अधीतवेदस्याविस्मरणायधारणाशक्तिप्रार्थनाभिप्रायकः तथापि पुराणेषुभगवतावेदव्यासेनलिङ्गधारणपरत्वेनापिव्याख्यातत्वात् तत्राप्यस्य तात्पर्यमवश्यं मन्तव्यम् छन्दसामृषभइति, वेदानां ऋषभः स्वामीकर्तृत्वेन प्रतिपाद्यत्वेन च विश्वरूपः सर्वान्तर्यामी "छन्दोभ्योऽध्यमृतात् सम्बभूवेति" अमृतात् मोक्षार्थं फलस्य हेतुत्वविवक्षयापञ्चमी अध्ययनेनवसतीत्यत्र तृतीयावत् छन्दोभ्योऽधिसम्बभूव, आधिक्येनज्ञापित इत्यर्थः समेन्द्रोमेधयास्तृणोतु सः इन्द्रः ऐश्वर्यवान् परमेश्वरः मेधया धारणाख्यया बुद्ध्या 'म', मां स्तृणोतु आच्छादयतु योजयत्विति यावत् अमृतस्यदेवधारणो भूयासं तादर्थ्यस्य सम्बन्धत्वेनविवक्षायां षष्ठीमोक्षार्थं देवस्य लिङ्गात्मकशिवस्य धारणः धारणकर्त्ता भूयासं भवानि "शरीरं मे विचर्षणं भूयादिति, विभक्ति

विपरिणामेनान्वयः मे मम शरीरं विचर्षणं दृढं भूयादित्यर्थः जिह्वामे मधुमत्तमा प्रियवादिनीभूयात् कर्णाभ्यां भूरि विश्रुतं भूरिबहु विश्रुतं विशेषरूपेणाश्रुतं भूयादितिब्रह्मणः कोषोऽसि वेदस्याधारोसि मेधया धारणाशक्त्या पिहितः रक्षितः वेदः ममयथाभवेत् एतदर्थं मे श्रुतं गोपाय मदधीतं रक्षेत्यर्थः यद्वा धारणाशक्त्या पिहितः आच्छादितः पुटके स्थापित इत्यर्थः लिङ्गरूपेणेति यावत् एतादृशोभूत्वा मेश्रुतं श्रुतिपुराणादिषु धार्यत्वेन बोधितं तदभिन्नं लिङ्गं गोपाय रक्षेत्यर्थः मद्देहाद्यावज्जीवं च्युतं यथा न भवेत्तादृशं कुर्वित्यर्थः देवशब्दस्य मुख्ययावृत्या परमशिवस्यैव बोधकत्वमित्यत्र प्रमाणं दर्शयति तस्माद्देवः शिवःस्मृतइति, 'कर्त्तरिल्युडन्तत्वेनेति' कृत्यल्युटो बहुलमित्यनेन अत एव पुल्लिंगत्वोपपत्तिः भावार्थकत्वेतु नपुंसके भावेक्तः ल्युट् च इत्युक्तेर्नपुंसकत्वंस्यात् इन्द्रशब्दार्थमाह 'निग्रहानुग्रह समर्थइति' तादृशसामर्थ्यमेव परमैश्वर्यम् 'मेधयास्तृणोत्विति, मेधांविना देवधारणेऽवश्यं प्रमादः स्यात् स माभूदेतदर्थमिदं मेधाप्रार्थनं बोध्यम्।

अत्रेदं विचार्यते यश्छन्दसामृषभो विश्वरूपइत्ययमनुवाद इत्य-

भ्युपेतव्यं यच्छब्दोपबन्धात् तस्य च पुरोवादसापेक्षत्वेन तस्याश्शिखायाः मध्येपरमात्माव्यवस्थित इत्येतन्नारायणोपनिषद्वाक्यमिहपुरोवादः तत्र च पद्मकोशप्रतीकाशमित्यादिनाहृदयंनिरूप्य तस्यान्ते सुषिरमितितदंतर्वर्तिसुषिरंप्रदर्श्यतस्यमध्येमहानग्नि रित्यारभ्यपरमात्माव्यवस्थित इत्यन्तेन तदन्तर्वर्तिसुषिरं प्रदर्श्य परमात्मनः प्रदर्शितत्वेन तथाविधमात्मानं यच्छब्दसामृषभइत्यनेनानूद्यधारणोभूयासमिति विधीयते तथाच देवधारणः देवस्यशिखामध्यवर्तिपरमात्मनोधारणोन्तर्धारणोभूयासमित्यर्थेसतिन लिङ्गधारणसिद्धिः किंचात्र विश्वरूप इति ब्रह्मलिङ्गप्रदर्शनेन ब्रह्मणः कोशोसी-

तिनिरुपपदब्रह्मपदप्रयोगेण च परमात्मन एवान्तर्धारणप्रतीतेश्चेति चेत्

यच्छब्दोपबन्धादिति यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणमित्युक्तेः अयमाशङ्कितुराशयः उद्देश्यताचिह्नभूतेन यच्छब्देन योगात् छन्दसामृषभ इति उद्देश्यताप्रयोजकं मन्तव्यम् उद्देश्यतायाश्च सिद्धत्व सापेक्षत्वात् केनचिद्वाक्येन प्राप्तिरत्रापेक्षिता तच्चवाक्यंनारायणोपनिषदिसन्निहितम् तस्याः शिखाया मध्ये परमात्माव्यवस्थित, इत्येतदेव धर्त्तव्यम् तद्वाक्येनहृदयपद्माकाशवर्त्तीनारायणः प्रदर्श्यते ततश्चायमर्थः सम्पन्नः योनारायणोहृत्पद्माकाशवर्त्ती वेदानां स्वामी तस्य देवस्यधारयिता भूयासम् 'अन्तरनुसन्धानकर्ताभूयासमित्यादिन च तदभिन्नतया अध्यवसितायाः शालग्रामादिमूर्त्तेरपि प्राप्ततया बहिर्धारणमपिप्राप्तमिति वाच्यम् तद्धारणस्याचारविरुद्धत्वात् ततश्च नारायणानुसन्धानमात्रमनेनविधीयते इति समाधत्ते।

नैवम् तन्मतेदेवधारणो भूयासमित्यत्रदेवस्य परमात्मनोधारणमंतरनुसंधानमुपासनमितिफलितं त-

याच तस्याश्शिखायामध्ये परमात्मा व्यवस्थित इत्येतत्पुरोवादप्राप्तस्य तस्य दहरं विपापं परवेश्मभूतं इत्यादिना पुरोवादप्राप्ततदुपासनाविषयत्वविधानेन तस्यैवदेवधारणो भूयासमित्यत्र विधेयत्वाङ्गीकारेपुरोवादाप्राप्तार्थसिद्धिर्नस्यात् न हिपुरोवादप्राप्तमनूद्य तदप्राप्तं किंचिद्विधातुं प्रवृत्तं वाक्यं तत्प्राप्तमेवार्थम् विधायसाफल्यं लभते ॥

नैवमिति अयमाशयः पूर्वोपदर्शित नारायणस्य दहरं विपाप्मपरवेश्मभूतमित्यादिनाऽनुसन्धानरूपोपासनस्य पूर्वमेव विहिततया तस्यैव देवधारणो भूयासममित्यनेन पुनर्विधाने सम्पूर्णवाक्यस्यैवेदानीं वैयर्थ्यापातात् न तथावक्तुं शक्यतइति, ।

अतएवयदातमस्तन्नदिवा न रात्रिर्न सन्नचासच्छिवएवकेवल इत्य-

त्वतमःपरेदेवएकी भवति 'दिव्योदेव एकोनारायण इति तमः प्रापकवाक्ये तमोधिष्ठातृत्वेन नारायणस्यप्राप्ते-श्शिवपदस्यापि नारायणपरत्वमिति पूर्वपक्षीकृत्य यदातम इति यदुपबं-धेनतमः प्रापकनिखिलवाक्यान्तरप्रा-प्तानुवादपुरस्सरं विधातुं प्रवृत्तस्य तन्न दिवा न रात्रिरित्यादिवाक्यस्य शिवपदस्य नारायणपरत्वे पुरोवा-दाप्राप्तविधायकत्वं नस्यादिति पु-रोवादगतनारायणपदस्यैव लक्षणा-दिनाशिवपरत्वमिति सिद्धांतितम् क-र्णामृतादिष्वप्पय्यदीक्षितैः न चास्यत-स्याशिषाया मध्य इति पुरोवादतां त-स्तदुपास्यत्वेन प्राप्तमेव परमात्मानम-

नूद्यामृतस्येत्यनेन मोक्षरूपं फलं विधीयत इति वाच्यं तस्यापि ब्रम्हणस्सायुज्यं सलोकतामाप्नोतीति पुरोवादत एव प्राप्तत्वेन तदप्राप्तत्वाभावात् ।

अत एव यदा तम इति अत एवेत्यस्य यच्छब्दोपनिबद्धवाक्यस्य पूर्ववादाप्राप्तविधायकत्वनियमादेवेत्यर्थः अत्र दिव्यो देवएकोनारायण इति पूर्ववाक्यसान्निध्यात् शिवएव केवलइति शिवपदस्य कथञ्चिन्नारायण परत्वमस्त्विति पूर्वपक्षमुत्थाप्य तथासति "यदातमस्तन्नदिवा न रात्रिर्नसन्नचासच्छिव एव केवल" इति वाक्यस्य वैयर्थ्यमेवस्यात् इदं वाक्यं हि पूर्ववादाऽप्राप्त शिवबोधनेनैव चरितार्थं शिवपदेननारायणस्यैव परिग्रहेतु तद्बोधस्य पूर्वमेव गतत्वेन तादृशविधित्वं न स्यात् इति अप्पय्यदीक्षितैः सिद्धान्तितम् न च दर्शिते नारायणपदस्यैवलक्षणादिना शिवपरत्वरूपे अप्पय्य दीक्षितसिद्धान्ते ऽपि तद्दोषतादवस्थ्यम् पूर्वं नारायणस्य पूर्वोक्तत्ववदिदानीं शिवस्यपूर्वोक्तत्वापातादिति वाच्यम् नारायणपदेनशिवपरिग्रहेरूढ्यंशेचि-

त्तवृत्तेराकृष्यमाणतया शिवस्य स्पष्टप्रतीत्यभावात् निश्चयात्मकतत्प्रतीत्यर्थं शिवएवकेवलइत्यस्यावश्यकत्वात् अत्रत्यशिवपदेन नारायण परिग्रहेतु रूढिशक्त्याप्रथममेव निर्णीतप्रतीतिविषयीकृतस्यगौण्यावृत्यापुनर्बाधने वैयर्थ्यावश्यं भावात्। यदेत्यादिश्रुत्यर्थस्तु यदा सृष्टेः प्राक्तमः अज्ञानात्मकं केवलमासीत् नदिनं न रात्रिः न सत् परमाण्वादि कारणं न चासत् महाभूतादिकार्यमासीत् किन्तु केवलः निरञ्जनः शिवएव तदानीमासीदित्यर्थः अत्र तमसः सत्तायाअनुपदमेवोक्तत्वात् शिवएवकेवल इति कैवल्योक्तिः नित्याभिव्यक्तचैतन्यवत्वेनसजातीयद्विती यव्यावृत्यभिप्रायाबोद्धव्या

अथभवन्मतेऽपिदेवधारणोभूयासमित्यत्रस्थूलांगलिंगधारणविधानेपुरोवादविरुद्धार्थविधानं स्यादितिचेन्नैवं नहि यश्छन्दसामृषभो विश्वरूप इत्यस्य तस्याः शिखाया मध्यइत्ययमेव पुरोवाद इति नियमः

'पुरोवादविरुद्धार्थेति, तस्याः शिखाया इति पुरोवादे नारायणस्य ध्यानं विहितम् अत्र बहिर्लिङ्गधारणमिति प्रकरणविरोध इति भावः

परन्तु सर्वलिङ्गंस्थापयतीत्ययमेव पुरोवादः तत्प्राप्तमेव स्थूलांगलिंगधारणमनूद्यप्रकृतेऽमृतस्येत्यनेन तदप्राप्तमोक्षरूपं फलं विधीयते अन्यथावाक्यमेवेदं व्यर्थं स्यात् ।

'परन्त्विति, सर्वलिङ्गंस्थापयतीत्यत्र विहितं सदाशिवात्मकलिङ्गधारणमेवात्रापिदेवधारणपदेनानूद्यामृतस्येति मोक्षरूपं फलं विधीयते ।

नचेष्टापत्तिः पूर्वतंत्रेद्भित्वविधायकवाक्यवैयर्थ्यपरिहारायपश्वावत्तेववपाकार्य्यैत्यत्रलक्षणांस्वीकृत्यवैयर्थ्यपरिहारः कृतः इहतु लक्षणां विनैवदेवधारणोभूयासमित्यत्रबहिर्लिङ्गधारणे मोक्षरूपफलविधानेन सर्वसा-

मन्त्रस्यकरणेकोभारइति न च सर्व-लिङ्गवाक्येनान्यथासिद्धिरपिसामान्येन विशेषफलविधायकस्यान्यथासिध्य-योगात् ।

'न चेष्टापत्तिरिति, वाक्यवैयर्थ्यमिष्टमेवाप-न्नमिति न वक्तव्यम् द्विरवद्यतीतिवाक्यवैयर्थ्यपरिहा-रस्य पञ्चावत्तैव वपाकार्येत्यत्र वपापदस्य लक्षणाक्लेशं स्वीकृत्यकृतत्वेनवाक्यवैयर्थ्येष्टतायाः शून्यहृदयेतरेण वक्तुमशक्यत्वात्

नन्वेवमपि "ज्ञानं महेश्वरादि-च्छेन्मुक्तिमिच्छेज्जनार्दनात्" इति स्म-रणेनजनार्दनस्य मुक्त्युपायत्वेनकथं लिङ्गाद्द्वैध्यकमुक्तिविधानमितिचेन्न-ज्ञात्वाशिवं शान्तिमत्यन्तमेति ईशं-ज्ञात्वामृता भवन्ति शिवएकोध्येय-शिवङ्करः सर्वमन्यत्परित्यज्येत्या-दिश्रुतिभिरितरव्यवच्छेदपूर्वकं शिव-

स्य मुक्त्युपायत्वावधारणेन श्रुतिस्मृत्योर्विरोधे विरोधाधिकरण न्यायेन-स्मृतेर्दुर्बलत्वात् ।

'विरोधाधिकरणन्यायेनेति' "विरोधेत्वनपेक्षंस्यादसतिह्यनुमानमिति" सूत्रोक्तेनेत्यर्थः सूत्रार्थस्तु विरोधे श्रुतिस्मृत्योर्विरोधे अनपेक्षं श्रुतिःप्रमाणमितिशेषः 'असति' वेदवाक्ये साक्षादनुपलभ्यमाने 'अनुमानं' स्मृतिः प्रमाणं भवतीत्यर्थः तथाचौ 'दुम्बरीं स्पृशन्नुद्गायेदिति" श्रुतेः "औदुम्बरीसर्वावेष्टव्येति" स्मृतेश्चपरस्परविरोधे श्रुतिविरोधात् सर्वावेष्टनस्मृतिस्त्यज्यते तद्वदिहापि ज्ञात्वा शिवं शान्तिमत्यन्तमेति ईशं ज्ञात्वाऽमृताभवन्तीत्यादिश्रुतिविरोधात् मुक्तिमिच्छेज्जनार्दनात् इति स्मृतिर्दुर्बलामन्यते, इति भावः ।

न च समेन्द्रोमेधयास्तृणोत्विति मेधाजनयितृत्वविधानेनतस्याभ्यान्तर्धर्मत्वादन्तरुपासनायां तद्धर्मप्राप्तिरेव साध्विति वाच्यं "सनोदेवश्शुभया स्मृत्यासंयुनक्तु" इति श्रुत्यालिङ्ग-

ङ्गसङ्गिनोवत्सपुनर्जन्मनविद्यते । युगपद्ज्ञानसंसिद्धिस्यात्ततो मोक्षमवाप्नुयात् । इति शङ्करसंहितावचनेन च मुक्तिजनकज्ञानस्य लिङ्गरूपशिवाधीनत्वात्तस्यैव धारणान्वयावश्यंभावात् अन्यथा । कर्मणैवहि संसिद्धिमास्थिताजनकादयः । इत्यादिनातीर्थयात्रागङ्गास्नानादीनां मुक्त्युपायजनकत्वं न स्यात् । लिङ्गधारणस्याऽदृष्टद्वारान्तरकत्वाच्चेति ।

नच सन्नेन्द्र इति । मेधायाः अन्तःकरणपदार्थत्वात् । तत्कारणीभूतमीश्वरधारणमपि कार्यकारणयोः सामानाधिकरण्यायोपासनारूपमेव ग्राह्यमिति प्रश्नः परमेश्वरस्य सर्वसामर्थ्यवत्त्वेन व्यापकत्वेन च लिङ्गरूपेण शरीरे धृतोपि सर्वत्र फलं जनयितुं शक्नोतीत्युत्तरमाह 'सनोदेवः शुभेत्यादि लिङ्गाङ्गसङ्गइत्यादि च बाह्यकर्मणामपि मनोयोगेनक्रियमाणत्वात् मानसातिशयसम्पादकत्वं शास्त्रसम्मतमित्युच्यते 'कर्मणैव हि संसिद्धिमिति' 'तीर्थयात्रागङ्गास्नानादीऽनामिति लिङ्गधारणस्येति च' शरीरस्य विचर्षणत्वं जिह्वाया-

मधुमत्तमत्वं च शरीरस्थमपि बहित्वह्मार्थितमस्ति तदर्थंबाह्यलिङ्गधारणमेवोचितमित्याह किञ्चेत्यादिना ।

किञ्चास्य शरीरधृतलिङ्गविधायकत्वे "शरीरं मेविचर्षणं जिह्वामेमधुमत्तमा कर्णाभ्यां भूरिविश्रुतमिति" बहिःपदार्थेषु विशेषविधानमपि सार्थकं भवति ।

रुद्राराधनेऽऽराधकस्यरुद्रत्वप्रा प्तेरपेक्षितत्वात्तस्याश्च लिङ्गधारणाधीनत्वा ल्लिङ्गधारणमवश्यं कर्तव्यमित्युपपादयति ।

रुद्रोभूत्वायजेद्रुद्रं नारुद्रोरुद्रमर्चयेत् । प्राणलिङ्गाङ्गसम्बन्धीसरुद्रोनात्रसंशयः ॥ इति शाङ्करसंहितावचनेन लिङ्गसम्बन्धादेव शिवाभेदसिध्याशरीरस्याप्युत्कर्षसिद्धेः इष्टलिङ्गप्रकृतिकगुरुलिङ्गस्य जलतत्त्वाभिमानिनोजिह्वाग्रवर्तित्वेन मधुमत्तमत्वप्राप्तेः

भावलिङ्गप्रकृतिकप्रसादलिङ्गस्याका-शतत्वाभिमानिनः श्रोत्रवृत्तित्वेन भूरिश्रवणासिद्धेः यच्चोक्तं विश्वरूपइति ब्रह्मलिङ्गस्य निरुपपदब्रह्मपदस्य च परिच्छिन्नलिङ्गधारणपरत्वेऽनुपपत्तिरिति । तदप्यरमणीयं भक्तानुग्रहार्थं परिच्छिन्नलिङ्गस्वरूपशिवस्यैवाथर्वशिरः प्रभृतिषु प्राङ्गोहं प्रत्यं चाहमित्यादिनासार्वात्म्योपदेशेन शिवस्यैव विश्वरूपत्वावसायात् "लिङ्गन्तद्ब्रह्मसंज्ञितमि"त्यपराधस्तवे शङ्कराचार्यैः लिङ्गे निरुपपदब्रह्मपदप्रयोगकरणेन अनुपपत्यभावादिति ॥

'रुद्रोभूत्वायजेद्रुद्रमिति' रुद्रत्वप्राप्तौ शरीरदार्ढ्यादिकमर्थादपपन्नं भवतीति । शिलष्यन्ति श्रुत्यन्तराण्यपि' 'इष्टलिङ्गप्रकृतिकेति ध्रियमाणलिङ्गे जलतत्वाभिमानित्वाकाशतत्वाभिमानित्वादीनां ध-

र्णाणां मान्त्रिक संस्कारबलात् सम्पादितत्वेन रसनेन्द्रियश्रोत्रेन्द्रिययोस्सम्बन्धात् जिव्हा मे मधुमत्तमा कर्णाभ्यां भूरिविश्रुतमित्युपपन्नतरम्भवतीत्यतोपिबाह्यलिङ्गधारणपरेयम् श्रुतिर्मन्तव्येत्यभिप्रायः प्राङ्गोहं प्राचीनोहं प्रत्यङ्गोहं अर्वाचीनोहं भक्तवात्सल्येनपरिच्छिन्नविग्रहं धृतवतः परमेश्वरस्योक्तिरियम् अतश्चलिङ्गरूपेपरमेश्वरेविश्वरूपत्वरूपवयोः प्रयोगोनानुपपन्न इति भावः।

अन्येतु श्रुतंमेगोपायेत्यत्र गोपायेत्यनन्वयापत्या देवधारणोभूयासमित्यत्र देवेतिपदच्छेदः तस्य च गोपायेत्यत्रान्वयः तथाचामृतस्यधारणो भूयासमिति प्राप्त्यान लिङ्ग धारणासिद्धिरिति पूर्वपक्षमवलंब्यदेवपदस्य सन्निधिश्रुतधारणान्वयं परित्यज्य अपरिमिताधिकरणन्यायेन गोपायेत्यत्रान्वयासंभवेन ब्रम्हणः कोशोसीति सन्निधिश्रुतब्रह्मपदस्यैव विभक्तिविप-

रिणामेनान्वयः स्वीकरणीयः अन्यथा-धारणपदस्य संयोगार्थकत्वेन तत्रामृत पदवाच्यमोक्षस्यान्वयासंभवादिति स-माधानमप्याहुः अस्याःश्रुतेरुक्तार्थे। यूयंश्रद्धान्विताविप्राः प्राणलिङ्गागंस-गिनः॥ स्थापयध्वमिमंमार्गं भुक्तिमु-क्तिफलप्रदं॥ मंगलात्मशिवलिङ्गधा-रणं संगवर्जिततनुः कुरुतेयः॥ अङ्ग-जोर्वदहनं भवसिन्धुं संगभंगतरलं प्र-तरेत्सः॥ शिवभक्तान्सदाचारनिरता-न्धृतलिङ्गकान्। विप्रानाराधयसदाभ-स्मरुद्राक्षधारिणः इत्यादि शङ्करसं-हितावचनानि पूर्वोक्तान्यपि कानि-चिदुपबृंहणाच्छायापन्नान्यनुसंधेयानी-ति * विद्यासुश्रुतिरुत्कृष्टारुद्रैकाद-शिनीश्रुतौ। तत्र पञ्चाक्षरी तस्यां

शिवइत्यक्षरद्वयं॥ इति सकलवेदशि-
खामणौ रुद्रैकादशिन्यां॥ यातेरुद्रशि-
वातनूरघोरापापकाशिनीति श्रुतिरपि
रुदं रोदनं संसारदुःखजनितं द्रावय-
तीतिरुद्रः॥ रुदमज्ञानं द्रावयतीति
वारुद्रः। हेरुद्र अघोरा शांताकारा
शिवा सर्वमंगलप्रदा याते तनुः लिङ्ग-
रूपशरीरं सा अपापकाशिनी लिङ्ग-
रूपशरीरावच्छिन्नशिवशमदमसंप-
न्नः भक्तगात्रे धार्य्यं इति पर्य्यवसि-
तार्थः तत्र जागरूकेत्यनुसन्धेयं उप-
बृंहितं च सिद्धांतशिखामणौ अघोरा-
पापकाशिनीति यातेरुद्रशिवातनूः।
यजुषागीयते यस्मात् तस्माच्छैवोघ-
वर्जितः। योलिङ्गधारीनियतांतरात्मा
नित्यं शिवाराधनबद्धचित्त इति। श्रीः॥

'अन्येत्विति' गोपायेति, मध्यमपुरुषैकवचन-
दर्शनेनदेवेति संबोधनं मन्तव्यम् धारणेत्यत्रचामृ-
तस्येत्यत्र चास्यान्वयः ततश्चमोक्षस्य धारणो भूया-
समित्यर्थलाभान्नलिङ्गधारणं सिध्यतीतिपूर्वपक्षः प्र-
त्यासत्तिरेवापरिमिताधिकरणन्यायेनान्वयनियामि-
काभविष्यतिन्यायस्वरूपन्तु पुरस्तान्निरुपितम् देव-
पदस्यप्रत्यासत्याधारणपदार्थेऽन्वयस्वीकारेपि गोपा-
येत्यत्र संबोधनलाभो भविष्यति ब्रह्मण इति षष्ठ्य-
न्तस्य सम्बुद्धिविभक्त्यन्तत्वेन विपरिणामे हेब्रह्मन्
गोपायेत्यन्वयसम्भवात् दुःखध्वंसरूपमोक्षस्यतु धार-
णपदबोध्यसंयोगेऽन्वस्य बाधात् तथा वक्तुं न शक्यत
इत्युत्तरम् 'उपबृंहणछायापन्नानीति' मङ्गलात्मकशि-
वलिङ्गधारणमितिधारणपदश्रवणेन देवधारणेति श्रु-
तिच्छायागम्यत इति भावः 'विद्यासु श्रुतिरुत् कृ-
ष्टेति' ततश्च "सर्वविद्याशिरोभूतारुद्रैकादनी त-
स्यामपि यातेरुद्रशिवातनूरघोराऽपापकाशिनीति"
मन्त्रेऽपापेषु भक्तेषु याते तनूः शिवलिङ्गरूपा काशते
शोभते इत्यर्थकेलिङ्गधारणस्य कर्त्तव्यत्वं प्रतीयते
सिद्धान्तशिखामणिसम्मतोऽयमर्थ इत्याहउपबृंहितं
चेत्यादिना' समाप्तमिदं प्रकरणम् * यजुर्वेदेन
लिङ्गधारणस्य कर्त्तव्यताबोधकम् ऋग्वेदेनापि तत्क-
र्त्तव्यत्वसाधनंप्रतिजानीते ऋग्वेदेपि तथाकुर्यामिति,।

शिवायनमः ॥ दर्शयित्वा यजुर्वेदे विधितोलिङ्गधारणम् । ऋग्वेदेपि तथाकुर्य्यां नत्वावीरेश्वरंमुदा ॥ पवित्रंते विततं ब्रह्मणस्पते । प्रभुर्गात्राणिपर्य्येषिविश्वतः अतप्ततनुर्न तदामोअश्नुते शृतासइद्वहंस्तत्समाशत इति।

अत्र ब्रह्मशब्देन लिङ्गमुच्यते लीनमर्थङ्गमयतीति व्युत्पत्यातदधिकरणत्वात्तद्व्यपदेशः "तल्लिङ्गं ब्रह्मशाश्वतं लिङ्गं ब्रह्मसनातनं" इति सिद्धान्तशिखामणौ लिङ्गंतद्ब्रसंज्ञितमिति शङ्कराचार्यकृतापराधस्तवेपि प्रयोगदर्शनाच्च तस्य पतिरधिष्ठाता तच्छरीरकस्सन् तत्रस्थितइत्यर्थः ।

पवित्रन्ते ब्रह्मणस्पते इति" ब्रह्मशब्देनशिवलिङ्गाभिधाने लिङ्गपदव्युत्पत्तिप्रदर्शनम् यद्यप्यनुपयुक्तम् ब्रह्मपदस्यस्वनिरुक्त्यास्वनिष्ठरूढ्यादिशक्त्या-

वा प्रवृत्तिमत्वात् तथापि लीनमर्थङ्गमयतीत्यनेन शिवलिङ्गस्य निगूढतत्त्वप्रतीति हेतुत्वलाभात् सर्वतो निगूढस्यब्रह्मणः शरीरत्वप्रतीत्या ब्रह्मपदवाच्यत्वाहँ तद्भवतीत्येतद्बोधयितुं लीनमर्थं गमयतीति लिङ्गपद व्युत्पत्तिर्दश्यत इति भावः।

तदित्यध्याहारः पवित्रपदविततपदयोर्लिङ्गार्थकत्वेकोशाद्यभावेन वृद्धप्रयोगाभावाच्चविशेष्यविशेषणभावासंभवेनविशेषणद्वयान्वयानुपपत्याविशेष्य वाचकतत्पदाध्याहारसूचकत्वाच्चेति।

'तदित्यध्याहारइति, पवित्रपदविततपदयोर्विशेष्यलाभायेत्यर्थः एतत्पदद्वयार्थानुपपत्तिरेव तत्पदाध्याहारे प्रमाणमित्याह अन्वयानुपपत्तिरिति, 'सूचकत्वाच्चेति, चकारः पञ्चम्यर्थहेतुत्वानुवादकः।

तथाच हेब्रह्मणस्पते लिङ्गरूपशरीरावच्छेदेन शरीरिभावेनाधिष्ठितपरमशिव ते तव तत् ब्रह्मपदवाच्यलिङ्गरूपं शरीरं पवित्रं उक्तरीत्याशुच्य-

शुचिकालेपि धर्तुं योग्यं विततं इष्टादि-
भेदेन भक्तशरीरादिभेदेन वा बहुविधं
प्रभुः निग्रहानुग्रहसमर्थस्त्वं विश्वत-
स्समस्तानि ( सार्वविभक्तिकस्तसिल् )
गात्राणिभक्तशरीराणि पर्य्येषि व्याप्नो-
षिधार्यमाणस्सन् लिङ्गरूपशरीरद्वारा
भक्ताङ्गसंयुक्तोसीत्यर्थः ननु ब्रह्मणस्प-
तइत्यत्र ब्रह्मपदेनस्थावरमिङ्गमुच्यते
ततश्चहेब्रह्मणस्पते शरीरिभावेन स्था-
वरलिङ्गाधिष्टितपरमशिव ते ब्रह्मप-
दवाच्यं लिङ्गं पवित्रं अध्वशोधनादि-
ना संस्कृतत्वेन परिशुद्धं विततं स्वयं
व्यक्तार्षपुरुषकृतादिभेदेन नानाविध-
मित्यर्थः किन्नस्यादितिचेन्नैवं स्थाव-
रलिङ्गस्य शरीरधारणासंभवेन प्रागु-

क्तार्थकस्यगात्राणिपर्य्येषिविश्वतइत्यस्यानन्वयापत्तेः ।

समुदायार्थमाह 'हे ब्रह्मणस्पत इत्यादिना, 'शरीरिभावेनेति, आत्मरूपेणेत्यर्थः इष्टभेदेनेति, इष्टलिङ्गप्राणलिङ्गाद्यनेकरूपेणेत्यर्थः 'भक्तशरीरभेदेनेति, प्रतिशरीरं भिन्नभिन्नलिङ्गस्यध्रियमाणत्वेन भक्तशरीराऽनेकत्वमपि लिङ्गविततत्वप्रयोजकं बोध्यम् 'भक्ताङ्गसंयुक्तोसीति, यद्यप्यत्रविधिबोधको लिङादिर्नास्ति तथापि श्रुतिबोधितलिङ्गधारणादिसदाचारेण विध्यनुमानं भविष्यतीति तात्पर्यम् 'स्वयं व्यक्तार्षपुरुषकृतभेदेनेति, स्वयं व्यक्तानि लिङ्गानि विश्वेश्वरादीनि ज्योतिर्लिङ्गानि, आर्षाणि अगस्त्येश्वरादीनि, पुरुषकृतानि हरिश्चन्द्रेश्वरादीनि, असंख्यातानि, तद्भेदेनेत्यर्थः ।

न च तस्याप्यपरिच्छिन्नस्वरूपेण भक्तशरीरसंम्बन्धोस्तीतिवाच्यं ।

'न च तस्येति, स्थावरलिङ्गस्यापि परमेश्वराऽभिन्नत्वेन व्यापकतया तस्मिन्नपिगात्राणिपर्येषीत्यंशोबाधितोनभवतीतिभावः ।

तर्ह्यपरिच्छिन्नत्वेन ब्रह्मलिङ्ग-विश्वव्यापित्वस्यैववक्तव्यत्वेन भक्तगा-त्रमात्रसम्बन्धकथनेप्रयोजनाभावात् ।

'प्रयोजनाभावादिति, ब्रह्माण्डमात्रव्यापकस्य भक्तगात्रसम्बन्धित्वोक्तेर्निष्प्रयोजनत्वोक्तिरुचितैव ।

ननुपवित्रम् इत्येतन्मन्त्रस्य सो-मदशापवित्रानुमन्त्रणे विनियुक्तत्वेन कथं लिङ्गधारणपरत्वं यद्यत्रविनियुक्तं तस्यतत्परत्वमेव संध्यावन्दनकालीन-तत्तद्देवतोपस्थानविनियुक्तमित्रस्येत्या-दि मन्त्राणां तत्तद्देवतापरत्ववदिति किं च सोमप्रकरणपठितस्यास्यमन्त्रस्य लिङ्गधारणपरत्वेप्रकरणविरोधश्चेति-चेत् ।

'सोमे, सोमयागे, दशापवित्रानुमन्त्रणेति, द-शापवित्रञ्च शुक्लाया अवेरूर्णाभिः सूत्रीकृताभिरोत प्रोतविशिष्टसोमशोधनाधारभूतोवासोविशेषः ॥ विनि-युक्तत्वेनेति, कल्पसूत्रे दशापवित्रानुमन्त्रणांगतया

बोधितत्वेनेत्यर्थः कथं लिङ्गधारणपरत्वमिति, आर्ष-वाक्येनान्यपरतया बोधितस्यान्यपरत्वं विश्वासानर्हमिति सोमप्रकरणपठितस्य लिङ्गधारणपरत्वोपगमः कर्त्तुं नशक्यत इति च प्रश्नाशयः ।

तदप्यसारं विनियोगमात्रस्य पूर्वोदाहृतप्रयोगावगमितब्रह्मपदलिङ्गपरत्वभङ्गकत्वायोगात् अस्तिचान्यपराणामपि मन्त्राणामन्यत्रविनियोगः अग्निर्मूर्धादिवः ककुदित्यादिमन्त्राणां वाचकश्रुतिबलादग्न्यादिपराणामेव ग्रहयज्ञेभौमादिपूजायां विनियोगदर्शनात् यजेत्पुरुषसूक्तेनधनदं विश्वरूपिणमितिदेवतांतरपरस्यापि पुरुषसूक्तस्य धनदयजनेविनियोगदर्शनाच्च ।

तदप्यसारमिति तत्तद्यागस्वरूपसम्पत्युपयुक्तोपयोगांशबोधनाय प्रवृत्तस्य विनियोगस्य वाक्यशक्त्या प्रतीयमानाङ्गाङ्गिभावाबाधकत्वादिति भावः

तदेवदर्शयति 'अग्निर्मूर्धेत्यादि, भौमादिपूजायामिति, मङ्गलादिग्रहादिपूजायामित्यर्थः 'देवतान्तरेति, स-हस्रशीर्षेत्यादिलिङ्गेन विष्णुपरस्यापि कुबेरयागे विनि-योगदर्शनान्नैकार्थनिष्ठत्वनियमो मन्त्राणामिति भावः ।

यद्यत्र विनियुक्तमिति नियमस्तु प्रकृतार्थवाचकपदघटितमन्त्रविनियोगस्थल एव नहि पवित्रशब्दस्य दशापवित्रार्थकत्वे किंचिन्नियामकमस्ति तर्ह्यभिधायकश्रुत्यघटितविनियोगस्थले प्रकृतप्रकाशनं कथमिति चेत् ।

'अभिधायकश्रुत्यघटितेति, देवताकर्मप्रकाशनमात्रे मन्त्राणामुपयोगात् तद्वाचकपदाभावे मन्त्रपाठो व्यर्थः स्यादिति भावः ।

कदाचनस्तरीरसि नेन्द्र सश्चसि दाशुष इतीन्द्रदेवताकस्य मन्त्रस्य ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति गार्हपत्योपस्थानविनियोगेपि मन्त्रस्याभिधानश्रुतिप्राप्तेन्द्रपरत्वं न हीयते प्रकृत

प्रकाशनं तु लक्षणादिनाभवतीत्यैन्द्र्याधिकरणन्यायेनावगन्तव्यमिति।

'कदाचनस्तरीरसि नेन्द्रे'तिमन्त्रस्यैन्द्रयागार्हपत्यमुपतिष्ठतीइतिविधिवाक्येनगार्हपत्योपस्थानाङ्गत्वेपि स्वघटकपदशक्तिलब्धमिन्द्रविषयकत्वं न बाध्यते विधिबलाल्लक्षणादिनागार्हपत्योप्युपस्थाप्यतइतिवत् इहापिदशापवित्रानुमन्त्रणाङ्गत्वेपि स्वार्थपरता न हीयत इति भावः पूर्वमापादितं प्रकरणविरोधं समाधत्ते यदुक्तमित्यादिना, 'सोमः पवतेर्जनितेत्यादिना'।

यदुक्तं प्रकरणविरोधइति तदपि न सोमःपवतेर्जनितामतीनां जनितादिवोजनितापृथिव्याः जनितासूर्यस्य जनितेंद्रस्य जनिता तविष्णोरित्यत्र जडीभूतसोमलतायाः नारायणादिजनकत्वासंभवेनोमयासहितस्सोम इति सोमपदश्लेषमहिम्नाशिवस्यापि प्रसक्तत्वेनतमादायतत्सिद्धिरिति सि-

द्धान्तितत्वेन लिङ्गधारणप्रकरणस्यापि सोमप्रकरणत्वेविरोधाभावात् किंच अयं सोमः कपर्दिन इतिश्रुत्यासोम-यागस्योत्पत्तिविशिष्टशिवसम्बन्धबो-धनेन रुद्रआहूत इति श्रुत्यासोमप-दस्थानेरुद्रपदप्रक्षेपेण सोमयागस्य रुद्रतादात्म्यबोधनेन अहं हि सर्वह विषांभोक्ताचैव फलप्रदः सर्वदेवत-नुर्भूत्वासर्वात्मा सर्वसंस्थित इति कूर्म-पुराणे शिववचनेनच शिवस्य सर्व-हविर्भोक्तृत्वकर्मफलदत्वप्रतिपादनेन सोमयागस्य रुद्रदेवताकत्वनिश्चयात्त त्प्रकरणपठितस्याप्यस्य मंत्रस्य लिङ्ग-धारणपरत्वेन प्रकरणविरोधाभावाच्च।

'सोमः', लताविशेषः 'पवतेः', पावनस्य यागस्य 'मतीनां यागबुद्धीनां स्वरसपरिणामद्वारोत्तमबुद्धीनां-दिवोयागफलस्य स्वर्गस्य पृथिवीसूर्येन्द्रविष्णूनांच-

जनितेत्यर्थः आपाततः प्रतीयतेपरन्तु लताविशेषे-
सूर्येन्द्रादिजनकत्वस्य वाधितत्वात् उमयासहित इति
व्युत्पत्त्या शिवो योग्यतावलाद्ग्रहीतुमुचित इति
तात्विकोर्थ इति नास्तिप्रकरणविरोधः अयं सोमः
कपर्दिन इति श्रुत्या सोमयागस्य कपर्दिसम्बन्धि-
त्वोक्तेः सोमागमनोत्तरं रुद्राहूत इत्युक्त्वा रुद्रसोमयोः
एकात्मत्वबोधनेन च सोमयागस्यरुद्रदेवताकत्वबो-
धनाच्च सोमप्रकरणपठितस्य रुद्रपरत्वे नास्तिप्रकर-
णविरोध इति भावः ।

नन्वास्तांतावदुक्तरीत्याप्रकर-
णाद्यविरोधःतथापि पवित्रंत इत्येत-
न्मंत्रेलिङ्गाद्यभावेन नविधिसंभवः न-
वाविधिप्रयोजकरूपसंपत्तिः एतन्मंत्र-
विहितलिङ्गधारणस्य तत्पावित्र्यस्यच
सर्वलिङ्गं स्थापयतीति विधिप्राप्तत्वे-
नान्यथासिद्धत्वादिति चेन्नैवं तस्मात्प-
वित्रं तल्लिङ्गंधार्यम् शैवमनामयमिति
वक्ष्यमाणोपबृंहणानुरोधेन प्रभुर्गात्रा-

णिपर्यैषि विश्वत इति मन्त्रलिङ्गेनचत-
ल्लिङ्गं धार्यमिति कल्पयितुं शक्यत्वात् ॥

लिङ्गाद्यभावेनेति एतच्च श्रुतिबोधिताचारेण विधिकल्पनायाम् उपयुक्तत्वेन समाहितम् तस्मात् पवित्रं तल्लिङ्गंधार्यं शैवमनामयमित्येतन्मन्त्रोपबृंहक-पुराणवाक्यं "प्रभुर्गात्राणिपर्यैषीति" लिङ्गं च विधिकल्पनायामनुकूलमित्याह मैवमिति, ।

यदप्यन्यथासिद्धत्वेन विधिप्रयोजकरूपं नास्तीति प्राचीनग्रंथेनोक्तं तदप्ययुक्तं शाखाभेदात् नहिशाखान्तरविहितकर्मणां शाखान्तरेऽन्यथासिद्धिसंभवः तथासतियजुश्शाखाविहितकर्मणामेव केषांचिदृग्वेद विहितत्वेन तद्विधायकवाक्यानांप्रवर्तकत्वानुपपत्तेरित्यलं प्रसक्तानुप्रसक्तया ।

शाखाभेदादिति, वेदभेदादित्यर्थः सर्वलिङ्गमिति वाक्यं कृष्णयजुः "पविन्तन्ते विततं ब्रह्मणस्पते इति" मन्त्रस्तु ऋक् ततश्च वाक्यद्वयस्य भिन्नशाखा-

वृत्तित्वेन नास्त्येकेनापरस्यान्यथासिद्धिरिति शाखाभेदेप्यन्यथासिद्ध्यङ्गीकारेऽग्निहोत्रादिकर्मणामनेकशाखासुविहितत्वेन तद्बोधकवाक्यानां सर्वेषामेव स्वेतरकृतान्यथासिद्धत्वापत्त्या कस्यापि वाक्यस्य विधायकत्वं न सिद्ध्येदिति भावः।

एवं पवित्रंतइत्यारभ्यपर्यैषिविभ्वत इत्यन्तेन लिङ्गधारणं तत्पावित्र्यं चविधायानेकश्रुतिविहितत्वेप्यत्यन्ताभ्यर्हितफलाभावाल्लिङ्गधारणमकर्तव्यमितिकेषाञ्चिज्जडानामाशापिशाचिकोचाट्टनार्थम् भगवतीश्रुतिरेवमुक्ताउपायान्तरव्यवच्छेदसूचनायव्यतिरेकमुखेन लिङ्गधारणस्य प्रयोजकत्वमभिवदति।

'व्यतिरेक मुखेनेति' लिङ्गधारणरूपमोक्षकारणाभावे मोक्षरूपकार्यस्याभावोभवतीत्येवं मोक्षाभावे लिङ्गधारणाभावव्यापकत्वबोधनमुखेन ततश्च लिङ्गधारणाभावव्यापकाभावप्रतियोगित्वरूपव्यतिरे-

कव्याप्तिः लिङ्गधारणस्यमोक्षे सिद्धाभवति ततश्च लिङ्गधारणरहितानां मोक्षोनभवतीत्युक्त्या लिङ्गधारणस्य मोक्षप्रयोजकत्वं लभ्यते ।

"अतप्ततनुर्नतदामोअश्नुत इति" तप्तावेधामनुक्रियादीक्षात्रयेण निर्दग्धपापपञ्जरातनुर्यस्य सा नभवतीत्यतप्ततनुः दीक्षात्रयरहितः आमः अपरिपक्वान्तःकरणस्सन्तत्परशिवस्वरूपं नाश्नुते । एवं च "लिङ्गांगसङ्गिनोवत्स पुनर्जन्मनविद्यतेति" शङ्करसंहितावचनानुरोधेन दीक्षात्रयमेव मुक्तावस्थाधारणकारणमिति फलितार्थः ।

दीक्षात्रयेणेति वेधादीक्षामनुदीक्षाक्रियादीक्षाभिरित्यर्थः 'पापपञ्जरेति' पञ्जरं पक्षिणां नियन्त्रितवासस्थानम् तद्वदावरकत्वात् पञ्जरत्वं पापेष्वाऽऽरोप्यतेएवं स्वमते "पवित्रन्ते ब्रह्मणस्पत" इति ऋङ्मन्त्रस्य लिङ्गधारणपरत्वं व्यवस्थाप्यरामानुजाचार्याभिमतस्यैतस्यैव मन्त्रस्य तप्तमुद्राधारणपरत्वं निराकर्त्तुमुपक्रमते रामानुजमतानुयायिनस्त्वित्यादिना ।

रामानुजमतानुयायिनस्तु पवित्रं चरणं चक्रमिति कोप्यप्रसिध्यापवित्रपदम् चक्रार्थकं ब्रह्मणस्पत इत्यत्रब्रह्मपदं चतुर्मुखब्रह्माभिधायि तस्य पतिः "नारायणाद्ब्रह्माजायत" इति श्रुत्याजनकत्वेनाधीश्वरः तथाच हेब्रह्मणस्पते "चतुर्मुखाद्युत्पादक" ते, पवित्रं, चक्रं विततं प्रभुः निखिलभुवननियामकस्त्वं गात्राणिभक्ताङ्गानिपर्य्येषि प्राप्नोषीत्यर्थः अतएव "अतप्ततनुर्नतदामोअश्नुत" इत्यप्यन्वर्थकं तप्ता "वह्निसन्तप्तचक्रेणपूर्वरूपपरावृत्तिपूर्वकरूपान्तरप्रादुर्भावा" तनुर्यस्यतादृशो न भवतीत्यतप्ततनुः दोर्मूलचक्रधारणरहितः तत् नारायणात्मकपरब्रह्मस्वरूपं आमः अपरिपक्वान्तःकरणोना-

श्नुते न प्राप्नोतीत्यर्थ इति व्याचक्रुः तदप्यश्रद्धेयं यद्यपिपवित्रं चरणं चक्रमिति

'कोशप्रसिद्धेति' अयं कोशः साम्प्रतिककोशपुस्तकेष्वनुपलभ्यमानतया कल्पित इवाभाति भक्ताङ्गानिपर्यैषीति प्रत्यासत्या तप्तचक्रसंयोगजनिताङ्करूपेणेत्यर्थः अस्मिन्मते तप्ततनुरिति तपधातुप्रयोगः प्रसिद्धार्थक एव परिगृह्यत इति तेषामभिप्रायः ।

धूर्तवैष्णवकल्पितस्य कोशत्व एव विवादः तथापि तुष्यतुदुर्जन इति न्यायेनाभ्युपेत्यनिराक्रियते मंत्रे चक्रधारणविधायकाभावात् ।

धूर्त्तवैष्णवकल्पितेति उपलभ्यमानकोशपुस्तकेष्वनुपलम्भएव तत्कल्पितत्वचिह्नमिति भावः चक्रधारणविधायकाभावादिति लिङाद्यभावादित्यर्थः गात्राणिपर्यैषीति सिद्धवदनुवादेन लिङ्गधारणपक्ष इवात्रापि विधेरनुमानं भविष्यतीति नाशङ्कनीयम् । ब्रह्मणस्पते इति सम्बोध्यपर्यैषीति मध्यमपुरुषप्रयोगेण नारायणस्य भक्ताङ्ग सङ्गित्वलाभेपि चक्रस्य तदलाभात् स्वमतेतु शिवलिङ्गस्य शिवाभिन्न-

त्वेन शिवस्य भक्ताङ्गसिङ्गत्वलाभे शिवलिङ्गस्यतल्लब्धम्भवति तप्तमुद्राङ्कने तु विष्णवभिन्नत्वं वैष्णवग्रन्थेष्वपि नास्तीति नास्तिनिरूढमित्याशयः ।

न च "गात्राणि पर्यैषिविश्वत"इत्येतद्विधायकं तस्यविष्णोरेव भक्ताङ्गसम्बन्धविधायकत्वात् ।

ननुपवित्रंत इति विष्णुसम्बन्धिचक्रमभिधाय गत्राणि पर्यैषि विश्वतइत्यनेन धारणविधानान्नारायणस्यधारणाप्रसिद्ध्या तदीयचक्रस्यैवत्सिद्धिरितिचेन्नैवं विकल्पासहत्वात्तथाहि चक्रस्यतल्लाञ्छनत्वेनधार्यत्वमुत तत् स्वरूपत्वेनाहोस्विन्नारायणाश्रयत्वेन नाद्यः । कौमोदकीगदाखड्गोनन्दकः कौस्तुभोमणिरिति काण्वावगमित तल्लाञ्छनानाम् बहुशस्सत्त्वेन तस्यैवधार्यत्वे विनिगमनाभावात् ।

ननुतन्मते शालग्रमादेर्धारणाप्रसिध्या पवित्र-पदेन चक्रस्य प्रत्यासन्नतया तद्धारणद्वारैव नारायणस्य व्यापकत्वमभिप्रेतमित्याशंक्य निराकरोतिमैवमिति ।

नद्वितीयः ततूस्वरूपत्वे तद-भेदसिद्धौ चक्रनारायणयोर्भेदगर्भित-लाञ्छनिलाञ्छनभावासम्भवेन तद्बो-धककोशविरोधापत्तेः ।

भेदगर्भितेति "शङ्खोलक्ष्मीपतेः पाञ्चजन्यश्चक्रं सुदर्शनमिति" कोशे लक्ष्मीःपतेरिति षष्टीबोधित स्वस्वामिभावसम्बन्धाद्धिप्रभेदगर्भितेत्यर्थः ।

तृतीयेपि अन्तर्बहिश्चतत्सर्वं व्याप्यनारायण इति श्रुतिबोधितसर्वा-न्तर्यामिभावेन तदाश्रयत्वमुतशरीरि-भावेननाद्यः पक्षः शोभांकलयते अ-न्तर्यामिभावेन नारायणस्य सकलप-दार्थवृत्तित्वेनसर्वेषामपि धारणीयता-पत्तेः ।

तृतीयेपि नारायणाश्रयत्वेन चक्रस्य धार्य्यत्वमिति कल्पेपि आश्रयत्वं विचारयति अन्तरित्यादिना, अयमाशयः "अन्तर्बहिश्चतत्सर्वं व्याप्यनारायणस्थितः," इति श्रुत्या वर्त्तमानस्य नारायणस्य चक्रेपि वृत्तितालाभात् नारायणाश्रयत्वं चक्रस्य स्वीक्रीयते आहोस्वित् चक्रस्यनारायणशरीरतया शरीरेषु जीवानामिवचक्रे नारायणस्यात्मरूपेणस्थिततया नारायणाश्रयत्वं मन्यत इति भावः नाद्यः पक्षइत्याह 'सर्वेषां धारणीयत्वापत्तेरिति' घटपटादीनामपि तदानीं धारणीयत्वादित्यर्थः नाप्युत्तरः पक्षइत्याह शरीरिभावेनेत्यादि ।

नोत्तरः पक्षः । शरीरिभावेन स्थित्यङ्गीकारेशालग्रामवैष्णवपूज्यताम्रादिविग्रहालयप्रतिष्ठिततत्तत्प्रतिमास्विवबाहुमूलधार्यचक्रादावपि नारायणस्य पूजानिवेदनादिकरणापत्तेः ।

'शालग्रामेति'शलग्रामइववैष्णवैः पूज्याः ये ताम्रदिमयभगवद्विग्रहास्तेषामालयेषु मन्दिरेषु प्रतिष्ठितायास्तत्तत्प्रतिमास्तासु इव बाहुमूलधृतचक्रादै गन्धपुष्पादिभिः पूजायाः करणीयत्वापत्तेः ॥

यदुक्तमतप्ततनुर्नतदामो अश्नुतइत्यनेन तत्सिद्धिरितितदपिनिर्मुक्तनीरदाकाशेवर्षधाराशामेवानुकरोति। ब्राह्मणस्य तनुर्ज्ञेयासर्वदेवसमाश्रिता। साचेत् सन्तापिताराजन् किं वक्ष्याम्यस्यपातकम्। गङ्गास्नानरतोवापि ह्यश्वमेधरतोपिवा। चक्रांकिततनुंदृष्ट्वापश्येत् सूर्यं जपेन्नरः। जपेच्चपौरुषं सूक्तमन्यथारौरवं व्रजेत्। भुजाग्रेव्यानते विप्रस्तप्तचक्रांकितोयदि। वेदाग्निज्ञानवान्सोपिदहत्यासप्तमंकुलमित्यादि धर्मशास्त्रवचनैस्तप्तमुद्राधारणस्यनिषिद्धत्वेन तत्परत्वेन व्याख्यानासम्भवेस्मदुक्तरीत्यैव व्याख्येयत्वात्। किंचास्यमन्त्रस्य सोमप्रकरणपठितस्य चक्रधारणपरत्वेप्रकरणविरोधश्च।

तमृशरीरस्य ब्राह्मणस्य मोक्षलाभस्तु दूरे तिष्ठतु वर्त्तमानमपि ब्राह्मणत्वमपैति, ब्राह्मणशरीरस्य सर्वदेवमयत्वेन तद्दहनप्रयुक्तं महत्पापमेव प्रत्युतोत्पद्यते इत्याह 'ब्राह्मणस्य तनुर्त्र्येत्यादिना,

न चास्मिन्मतेतदापत्तिः । पूर्वमेवनिरसितत्वात् ।

'नचास्मिन्मते तदापत्तिरिति, लिङ्गधारणपरत्वोपगमकल्पे तस्य सोमप्रकरणपठितत्वप्रयुक्ताप्रकरणविरोधस्यापत्तिर्नास्तीत्यर्थः कथमित्याह पूर्वमेव निरस्तत्वादित्यर्थः सोमपदे उमयासह वर्त्तत इति व्युत्पत्याश्रयणेनेत्यर्थः

यद्येवमप्यतप्ततनुरित्यस्य ह्यवसानगत्याचक्रसन्तप्तशरीरार्थकत्वमेवांगीकरोषितदाअकारोविष्णुवाचक इति स्मरणेनआय विष्णवेविष्णवर्थमितियावत् । तप्तातनुर्यस्य सोतप्ततनुः । एवं भूतः आमः अपरिपक्वान्तःकरणस्सन्ततू परब्रह्मस्वरूपं ना-

श्नुते । परन्तुश्नञ्पाक इति धातोः शृतासस्तश्राःसंतः इत्तापजन्यं क्रियांव-हन्तः तत्क्रियामेवसमाश्नते प्राप्नुवन्तीत्ये-वार्थस्स्यात् । प्रागुक्तनिषेधानुरोधात् ।

अवसानगत्येति, अन्ततोगत्येत्युक्तिवदियमु-क्तिर्बोद्धव्या अतप्ततनुरित्यस्य, "यद्यपि विष्णवे तत्प्रा-तनुर्यस्येत्यादिव्याख्यानं यद्यप्यत्यन्तक्लिष्टम् । तथापि तप्ताचक्रतापितेत्यादिवैष्णवैः कृतस्य व्याख्यानस्यापि क्लिष्टत्वात् "तपोमूलमिदं सर्वं तपोमध्यतपोन्तकम् । ऋषयः संयतात्मानः फलमूलानिलाशिनः तपसैव प्रपश्यन्ति त्रैलोक्यं सचराचरम् इत्यादिमनुस्मृत्या-दिभिवर्णितस्य तपस एव अतप्ततनुरित्यत्र तपधा-तुनाग्रहीतुमौचित्त्येनतदनुरोधेनातप्ततनुरित्यादेःकृ-च्छ्रचान्द्रायणपरमेश्वराराधनादिनाऽक्लेशितशरीरःत-द्ब्रह्मपदं नाश्नुते इत्याशयेन प्राप्तव्याख्याविरुद्ध-त्वाच्च याद्दशोयक्षइति न्यायेन तन्निराकरणायैवं व्याख्यातमिति बोध्यम् । ननु लिङ्गधारणपरतया व्याख्यानेपि तपः परकव्याख्यानविरोधस्तुल्य एवे-तिचेन् मैवम् । यावज्जीवं शिवलिङ्गावियोगरक्षायाः यावज्जीवं प्रत्यहं तत्पूजननिर्वाहस्य च परमतपोरू-पत्वात् तथैवाग्रेपि प्रतिद्वन्द्विरूपार्थभावनापत्तियो-

र्यत्वबोधनाभिप्रायेणैवव्याचष्टे 'शृज्र्पाकइत्यादि न-न्वीदृशार्थे किं मानमित्याह 'प्रागुक्त निषेधानुरोधा-दिति' "चक्राङ्कितततनुम् दृष्ट्वा पश्येत्सूर्यं जपेन्नरः इत्यादिदोषोक्तिसूचितनिषेधानुरोधादित्यर्थः ।

अथैवमपि पवित्रपदस्य कोषा-प्रसिध्याचक्रार्थकत्वमावश्यकम् तथा-पि न पावित्र्यादिबोधः रूढेर्योगाप-हारकत्वादितिचेन्न ।

रूढेर्योगापहारकत्वादिति वैष्णवपरिकल्पित-कोशसिद्धरूढिशक्त्या पावित्र्यार्थकत्वस्य बाधोभविष्य-तीति भावः ततश्च चक्रधारणपरतयैवायंमन्त्रोव्या-ख्यायत इति शङ्कितुराशयः कल्पितेपिकोशे कोशत्व-मभ्युपेत्यसमाधत्ते ।

सतिबाधकेकोशस्यशक्तिग्राह-कत्वानंगीकारात् ।

सतिबाधक इति गौरवादिरूपबाधके सति कोशस्य लक्षणादिग्राहकत्वमङ्गीक्रियते इति भावः ।

अतएवनीलोघटः शुक्लः पटइ-त्यादौगुणेशुक्लादयः पुंसिगुणिलिंगा-

स्तुतद्वतीतिकोशेननीलादिपदस्य रू-
पवाचकत्वेपिसमानविभक्तिकपदस्य-
लेभेदसंसर्गबोधासंभवेन रूपवतिश-
क्त्यंगीकारेगौरवेणचनिरूढलक्षणैवां-
गीकृता ।

लक्षणैवाङ्गीकृतेति गुणिलिङ्गास्तु तद्वती-
त्यमरकोशस्यात्यन्तप्रामाणिकस्यापि गौरवदोषेण शु-
क्लादिपदानां गुणिनि लक्षणाग्राहकत्वमेवोपगम्यते
कोशपुस्तकेष्वनुपलभ्यमानतया कोशवाक्यत्वमेवय-
स्मिन् सन्दिग्धं तद्बलात् चक्रधारणनिषेधवाक्यानां
विरोधिनां पुरस्तात् कथं शक्तिस्तत्रेष्यतइति ता-
त्पर्य्यम् ।

रूढेर्योगापहारकत्त्वमपिरूढ्य-
र्थाबाधस्थलएव । अन्यथापंकजमान-
येत्यादौ पद्मबाधेपियोगार्थकुमुदबो-
धोनस्यात् । प्रकृतेतूक्तदिशाचक्रार्थक-
त्वं बाधितमेवेति । एतेन“तप्तंचक्रं-
द्विभुजेधार्यमिति”विधितएवचक्रधा-

रणासिद्धिरित्यप्यपास्तम्। पठ्यमान-शाखायामनूचानेनपाठस्यादर्शनातूत-स्यश्रुतित्वस्यैवविवादात्।

'रूढ्यर्थाबाधेति, तद्बाधेतु केवलयोगार्थस्यापि बोधोभवति अत एव पङ्कजपदात् पद्मबाधेकुमुद-बोधोपि भवतीत्याशयः। इदं रूढेर्योगापहारकत्वादि-त्यक्षरखण्डनावेशमात्रेणोच्यते वस्तुतस्त्व नुपयुक्तं स्वविरुद्धं च प्रकृते चक्रत्वपाविन्त्र्ययोरेकत्राबाधितत्वे-नोभयोर्विशेषणभावापन्नयोर्बोधः कस्मान्नेति शङ्काया उत्थापकत्वात् अत्रोदाहरणमपेक्षितम् उक्तदिशेति, चक्रधारणनिषेधानुसंधानेनेत्यर्थः अनूचानेन सांगवे-दाध्यायिना।

यदि च विप्रकीर्णशाखापा-ठादिकमभ्युपेत्यतथात्वमंगीकरोषित-थापिनतेनतत्सिद्धिः। प्रागुक्तविक-ल्पपराहतत्वात्। निषेधशास्त्रानुरो-धाच्च।

विकल्पपराहतत्वान्निषेधशास्त्रानुरोधाच्चेति युक्तिविरोधात् प्रत्यक्षवाक्यविरोधाच्च उच्छिन्नशा-

खास्वपि ऽक्तविधिवाक्यसत्त्वसम्भावना निरस्ताभवति अनुपलभ्यमानशाखासु प्रामाणिकस्मृतिषु चानुपलम्भेनाविगीतशिष्टाचारपरिग्रहाभावविशिष्टेन तादृशविधेरुत्सन्नशाखावृत्तित्वाभावानुमितौ विपक्षे निषिद्धत्वानुपपत्तिरूपोबाधकस्तर्कोऽस्तीति भावः ।

**सर्वं वाक्यमितिन्यायेनभुजद्वयोद्देशेन चक्रधारणरूपविधानेशंखधारणासिध्या दक्षिणेतुभुजेविप्रोबिभ्रियाद्वैसुदर्शनं । सव्येतुशंखंबिभ्रियादितिब्रह्मविदोविदुरिति वचनविरोध आचारविरोधश्चेत्यलमसदावेशेन**

सर्वं वाक्यंसावधारणमिति महाभाष्यकारदर्शितन्यायेन तप्तं चक्रं द्विभुजेधार्यमिति विधावपि चक्रमेवद्विभुज एव इत्याद्याकारलाभात् दक्षिणेतु भुजेविप्रो विभृयाद्वैसुदर्शनम् । सव्ये शङ्खंच विभृयादिति ब्रह्मविदोविदुरिति भवन्मतसिद्धवचनेनैव तद्विधिवाक्यं विरुद्धं भवतीतिभावः ।

**गुरुचरणास्तुब्रह्मणस्पतइत्यनेन"विश्वाधिकोरुद्रोमहर्षिः हिरण्यगर्भंजनयामासपूर्वं" । योब्रह्माणंवि-**

दधातिपूर्वं । इत्यादिश्रुतिभिर्हिरण्य-
गर्भजनयितृत्वेनप्रसिद्धः परमशिवो-
भिधीयते । पवित्रपदंलिङ्गार्थकंस-
र्वलिङ्गंस्थापयति पाणिमंत्रंपवित्रमि-
त्यत्रलिंगपदसामानाधिकरण्यात् ।
लिंगपदसामानाधिकृतपवित्रशब्दस्य-
कथंलिंगार्थकत्वमितिचेन्न । "वज्रंय-
थामक्षिकयावकीर्णमिति"रामायण-
श्लोकव्याख्याने । वज्रोवाआज्यमि-
तिश्रुतावाज्यपदसामानाधिकरण्येन
वज्रपदस्यसंस्कृताज्यपरत्वमितिम-
हेश्वरतीर्थादिभिरंगीकृतत्वात् । न-
चप्रकृतेपवित्रपदस्यमंत्रपदसामाना-
धिकरण्येपिनलिङ्गपदसामानाधिक-
रण्यमितिवाच्यं । मननात्त्रायत इति
व्युत्पत्यामंत्रपदस्यापिलिङ्गार्थकत्वा-

तु। वाच्यवाचकरूपेणाद्विधामन्त्रः प्रकी-
र्तितः। वाचकोवर्णरूपःस्याद्वाच्यश्चप-
रमशिवः। इति न्यास निरुक्तेश्च। तथा
च। हे ब्रह्मणस्पते-परमशिव, ते-तव,
पवित्रं-लिंगं, विततं इष्टादिभेदेनानेक-
विधत्वाद्विस्तृतम्, प्रभुः-अखंडजगदं-
डनियामकस्त्वङ्गात्राणि भक्तशरीरा-
णिविश्वतस्समंतात्पर्येषि सर्वाङ्गेषु च
सर्वत्रसर्वदासर्वतोमुखम्। लिङ्गंगुरूप-
देशेन सुप्रतिष्ठितमात्मनीत्यारभ्यए-
कमेवपरंलिङ्गमङ्गेस्मिन् सुप्रतिष्ठितम्।
सर्वतोमुखमाभातिनामरूपक्रियात्म-
ना। इष्टलिङ्गंतुबाह्याङ्गेप्राणलिङ्गं तथा-
न्तरे। भावलिङ्गंतथैवास्तिआत्माङ्गेसु-
प्रतिष्ठितम्। हृदयाङ्गेमहालिङ्गंश्रोत्रा-
ङ्गेषु प्रसादकम्। त्वगङ्गेचरलिङ्गंचदृग-

ङ्गे शिवलिङ्गकम् । जिह्वाङ्गे गुरुलिङ्गं स्या-न्नासिकाङ्गे तथैव च । आचारलिङ्ग-मप्यांतं सुप्रतिष्ठितमेव हि । यथाज्ञा-नेन्द्रियाङ्गेषु क्रमाल्लिङ्गं प्रतिष्ठितम् । तथा कर्मेन्द्रियाङ्गेषु क्रमाल्लिङ्गं प्रतिष्ठित-मिति ।

परशिवोऽभिधीयत इति ब्रह्मणो हिरण्यग-र्भस्य जनयितृत्वात् पालकत्वाच्चेतिभावः सामानाधि-करण्यादिति, वज्रोवाआज्यमिति श्रुतेर्वज्रशब्दस्या-ज्यार्थकत्वात् पाणिमन्त्रं पवित्रमिति सामाना-धिकरण्यात् पवित्रशब्दस्य लिङ्गार्थकत्वं भविष्य-तीत्याशयः ।

वातुलागमोत्तरभागे ऽनुभवसूत्र-स्थितवचनरीत्या समस्तभक्ताङ्गान्यघ-टितघटनापटीयांस्त्वमेव व्याप्नोषी-त्यर्थ इति प्राहुः ॥

'वातुलागमोत्तरेति, प्राहुरिति, पूर्वस्मिन् कल्पे ब्रह्मणस्पत इत्यस्य लिङ्गशरीराधिष्टितेत्यर्थः अस्मिन् व्याख्याने च चतुर्मुखजनक इत्यर्थः ।

अन्येतुपवित्रं तेविततमित्यत्र विततशब्दस्तनुशब्दवत्तनुविस्तार इतिधातुनिष्पन्नत्वेनशरीरार्थकः ब्रह्मपदँल्लिङ्गार्थकम् तथाचहेब्रह्मणस्पते-लिङ्गाधिष्ठानक परमशिव, तेविततम् लिङ्गरूपशरीरम् पवित्रं-शुच्यशुचिकालेपिधारणयोग्यम् प्रभुःतादृशलिङ्गशरीरको भुक्तिमुक्तिफलप्रदाता भक्तशरीराणिपर्येषि व्याप्नोषिलिङ्गशरीरावच्छिन्नशिवोभक्तगात्रेषु धार्यइत्यक्षरार्थइत्याहुः ।

अन्येत्विति, अस्मिन् मते विततपदस्य शरीरार्थकत्वमुपपादयति तनुविस्तार इत्यादिना, ।

गुरुमतेत्वियान्विशेषः "उद्देश्यवचनं पूर्वं विधेयस्य ततः परमिति" मिश्रकारिकानुरोधेन पवित्रं ते विततमित्यत्र पवित्रपदस्य लिङ्गार्थ-

कत्वेविततपदवाच्यविस्तृतत्वस्य विधे-
यत्वेनोद्देश्यविधेयवाचकशब्दयोः पौ-
र्वापर्यं सिध्यति ॥ विततशब्दस्य
लिङ्गार्थकत्वेपाविच्यस्य विधेयत्वेतुवै-
परीत्यमिति उक्तार्थानुरोधेनैवास्यम-
न्त्रस्योपबृंहणमप्यस्तिलिङ्गपुराणे । की
टोभ्रमरयोगेन भ्रमरोभवतिध्रुवं ।
मानवश्शिवयोगेन शिवोभवति नि-
श्चयः ॥ ब्रह्मविष्णवादयोदेवामुनयो-
गौतमादयः । धारयन्ति सदालिङ्ग
मुत्तमाङ्गेविशेषतः इत्युपक्रम्यब्रह्मेति-
लिङ्गमाख्यातं ब्रह्मणस्पतिरीश्वरः ॥
पवित्रं तद्धिविख्यातं तत्संपर्कात्तनु-
श्शुचिः । ऋगित्याहपवित्रं ते विततं
ब्रह्मणस्पते तस्मात्पवित्रं तल्लिङ्गं धार्य्यं
शैवमनामयं । अतप्ततनुरज्ञोवै आ-

मस्संस्कारवर्जितः। दीक्षयारहितस्सा-
क्षान्नाप्नुतेलिङ्गमुत्तमम् ॥ यः करोति
तपः पूर्वं सतप्ततनुरुच्यते। परिपक्वो-
विमोक्षायसोप्नुतेलिङ्गधारणं न करो-
तितपः पूर्वं सोऽतप्ततनुरुच्यते। अप-
क्वोयं विमोक्षायनाप्नुतेलिङ्गधारण-
मिति ॥ अत्र ब्रह्मेतिलिङ्गमाख्यात-
मिति तद्धिविख्यातमिति धार्यंशैव-
मिति चोक्तार्थापोद्बलकमिति स्पष्टम् ॥
किञ्च ॥ इति सम्बोधितःशिष्योगुरुणा
शास्त्रवेदिना ॥ धारयेच्छाङ्करं लिङ्गंश-
रीरे प्राणयोगतः ॥ लिङ्गस्यधारणं पु-
ण्यं सर्वपापप्रणाशनम्। आदृतं मुनि-
भिस्सर्वैरागमार्थविशारदैः ॥ इष्टलिङ्ग
मिदं साक्षादरिष्टपरिहारकम्। धार-
येदवधानेन शरीरेसर्वदाबुधः ॥ धार-

येदवधानेन लिङ्गन्तद्गुरुणार्पितं ॥ प्रमादात्पतितेलिङ्गे प्राणानपिपरित्यजेत् ॥ इत्यादिशङ्करसंहितासिद्धान्तशिखामण्यादिवचनान्युक्तार्थोपोद्बलकान्यनुसन्धेयानीति । ऋग्वेदेपिन केवलं पवित्रं तइति मन्त्रेणैवतत्सिद्धिः । किन्त्वयं मेहस्तइति मन्त्रान्तरेणापि तदेवसिध्यति ॥

उद्देश्यवचनंपूर्वमिति, पर्वतोवह्निमानित्यत्रेवेति भावः मिश्रकारिकेति मण्डनमिश्रकारिकेत्यर्थः । ब्रह्मेति लिङ्गमाख्यातमिति, इदं प्रथमव्याख्यानानुकूलम् । ऋग्वेदस्यैव मन्त्रान्तरं प्रमाणयति 'अयं मेहस्त-इत्यादिना ।

अयंमेहस्तोभगवानयं मेभगवत्तरः अयं मेविश्वभेषजोऽयंशिवाभिमर्शनः । अयं माता अयं पिताअयं जीवातुरागमात्, इदं तवप्रसर्पणं सुबन्धवेहिनिरीहीति ॥ अत्र भगवच्छब्देन

परमशिव एवोच्यते ॥ अथैनं भगवन्तं रुद्रं कुमारः पप्रच्छ ॥ अथकालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छेत्यादिश्रुतिषु इतिसंस्तूयमानस्तुभगवान्वृषभध्वजइतिहरिवंशादिषु च शिवेतत्पदप्रयोगात् । एवं चायं भगवान् लिङ्गरूपशिवः मेहस्तः हस्तगतः मेमत्सम्बन्धी अयं शिवः भगवत्तर इत्यर्थः ॥

अर्थस्तु अयम्भगवान् लिङ्गरूपसदाशिवः मेहस्तः ममहस्तगत इत्यर्थः। अयमेव सदाशिवः मे भगवत्तरः ममसर्वैश्वर्यवत्तरः अयं मे विश्वभेषजः विश्वेषां रोगाणां निवर्त्तकौषधस्वरूपः अयं शिवाभिमर्शनः सर्वेषां कल्याणानां प्रापकः 'अयं माता, मातृवत् वात्सल्यवान् 'अयं पिता, पितृवद्रक्षकः 'अयं जीवातुः, जीवसाधनभूतः 'आगमात्, शास्त्रप्रामाण्यात् "इदं तवप्रसर्पणं हेसुवन्ध्वेहि," हेसुवन्धो निरुपाधिकविश्वसुहृद् एहि आगच्छ इदं तवप्रसर्पणं 'इदं मद्धस्तगतं लिङ्गंतवप्रसर्पणं विहार-

स्थानं निरीहीति, निर्गमचेष्टारहितः सन् अस्मिन् शिवलिङ्गेतिष्ठेत्यर्थः अत्रकतिपयपदानां अर्थान्तरं स्वयमग्रे मूलकारोवक्ष्यति अत्र भगवत्पदेन सदाशिवएवोच्यते भगवन्तं रुद्रं कुमारःपप्रच्छ 'अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छ इत्यादि वेदवाक्येषु भगवान् वृषभध्वजइति हरिवंशादिषु च सदाशिव एव भगवच्छब्दस्य प्रयोगात् हस्तगतइत्यनुक्त्वाअयं मे हस्त इति बाधितार्थकं कथमुच्यते इत्याशङ्क्य समाधत्ते 'आदित्योभगवान् सूर्योनीलग्रीवस्त्रिलोचन इत्यादिना ।

ननु हस्तगतो भगवानिति वक्तव्येहस्त इत्युक्तिः कथमिति चेन्न आदित्योभगवान् सूर्योनीलग्रीवस्त्रिलोचनः । अधीयते सहस्रांशुःसामगाध्वर्युहोतृभिरित्यादित्यपुराणवचने यएषोन्तरादित्येहिरण्मयः पुरुषोदृश्यत इत्यारभ्यांबिकापतय उमापतये पशुपतयेनमोनम इत्यन्तेन

तैत्तिरीयवचनेन। सौरमण्डलमध्यस्थं साम्बंसंसारभेषजम्। मण्डलान्तरगतं हिरण्मयं भ्राजमानवपुषं शुचिस्मितमित्यादिवचनैश्चादित्यगतत्वेन प्रतिपादिते परमशिवेशिवादित्ययोरविभाज्यसम्बन्धद्योतनायादित्यगतस्त्रिलोचन इत्यनुक्त्वाऽदित्यस्त्रिलोचन इत्युक्तिवदयं मेहस्तोभगवानित्यत्रापि हस्तशिवलिङ्गयोरविभाज्यसम्बन्धसूचनायहस्तगतइत्यनुक्त्वाहस्तोभगवानित्युक्तमिति वक्तुं शक्यत्वात्।

"य एषो अन्तरादित्ये हिरण्मयः पुरुषोदृश्यत इति य आदित्येतिष्ठन्नादित्यमन्तरोयमयति यं आदित्यो नवेद यस्यादित्यःशरीर"मित्यन्तर्यामिब्राह्मणमप्यत्रानुसंधेयम् एवं "सौरमण्डलमध्यस्थं साम्बं संसारभेषजमि"त्यनेनापि मण्डलादिभिन्नत्वं मण्डलान्तर्गतत्वं साम्बशिवस्य प्रतीयते तथापि आदित्यस्त्रिलोचनइत्यभेदोपचारोदृश्यत एवमेवायंमे-

हस्तोभगवानित्यत्रापि द्रष्टव्यमित्याह आदित्यस्त्रिलोचन इत्युक्तिवदिति, त्रिलोचनस्यादित्यमण्डलान्तर्गतत्वेपि आदित्याभेदोपचारवत् शिवलिङ्गस्य हस्ते पूज्यरूपेण वर्त्तमानत्वेप्ययं मे हस्तइत्यभेदोपचार इति भावः उपचारफलन्तु हस्तशिवलिङ्गयोरविभाज्यसम्बन्धबोधनमेव सम्बन्धे अविभाज्यत्वं च जीवनदशावच्छिन्नभक्तशरीरवृत्यभावाप्रतियोगित्वम्।

तेनच लिङ्गधारणस्य सर्वदाकर्त्तव्यत्वं सिद्धति नच धृतेपि लिङ्गेऽवयवान्तरावच्छेदेन वृत्यभावप्रतियोगित्वस्यसत्त्वेनबाधइति वाच्यम् अभावे प्रतियोगिव्यधिकरणत्वस्यनिवेशनीयत्वात्, नचैवं धारणपूर्वकपरित्यागेपि तादृशाप्रतियोगित्वाबाध इति वाच्यम् स्वप्रतियोगिनिष्ठाधेयतावद्भिन्नत्वरूपवैयधिकरण्यस्य प्रवेशनीयत्वात् आधेयतावैशिष्ट्यंच स्वावच्छेदककालावच्छिन्नत्वस्वनिरूपकशरीरनिरूपितत्वोभयसम्बन्धेन एतदभिप्रायेण वक्ष्यति।

एवं चोभयोरविभाज्यसम्बन्धानुपपत्या संस्कृत्यगुरुणादत्तंषडध्वन्यासपूर्वकं। वामहस्तगतं लिङ्गंसाव-

धानेन पूजयेत् । धारयेद्वास्तुहस्ता-
दौलिंगाकारं शिवं सदा । तस्य
हस्तस्थितं विद्धिमत्पदं संपदांपदम् ।
इति वातुलवीरागमाद्युपबृंहणादि-
वचनानुरोधेन च हस्तादौधारणं ल-
भ्यते हस्तशिवलिङ्गसम्बन्धस्याविभा-
ज्यत्वादेव । धारयेदवधानेन लिङ्गं
तद्गुरुणार्पितं । प्रमादात्पतितेलिङ्गे
प्राणानपिपरित्यजेत् । पतितेप्राण-
लिङ्गेयः प्राणान्धत्तेनराधमः । सच-
ण्डाल इतिज्ञेयश्शिवद्रोहीनसंशयः ।
हस्तसिंहासनेलिङ्गमप्रमादेनधारयेत् ।
प्रमादात्पतितेलिंगेसहप्राणान् परि-
त्यजेत् । लिङ्गपातिनमाचारनिन्दकं न
हृदिस्मरेत् । भूमौप्रतिष्ठितं लिंगंपुन-
र्नोत्पाट्यते यथा । देहेप्रतिष्ठितं लि-

ङ्गमन्तेपिनविभज्यत इत्यादिलिङ्गा-
ङ्गविभागे दोषविधायकशङ्करसंहिता-
दिवचनान्यपि सङ्गतानि। तद्वचना-
नामपि शरीरविभक्तलिङ्गस्य पुनस्स-
ङ्ग्रहेस्वगृह्योक्तविधानेनवाऽन्तरप्रा-
यश्चित्तमेवाऽसङ्ग्रहेतुमरणान्तप्राय-
श्चित्तमित्यत्र तात्पर्यमिति द्रष्टव्यं।
अत एवोक्तमीशावास्योपनिषदि। "ते-
न त्यक्तेनभुञ्जीथाः मागृधः कस्यस्विद्ध-
नमिति"। तेन कारणेन त्यक्ते प्रमादा-
दिनालिङ्गत्यागे सति पुनरसङ्ग्रहेच
सति नभुञ्जीथाः परन्त्वनशनादिनाश-
रीरमेवविसृजेत्। कस्यस्वित् अन्यदीयं
धनं लिङ्गंमागृधः न स्वीकुरुष्व। "धनं
वैलिङ्गमिति" कौषीतकीश्रुतिरिति।

षडध्वन्यासपूर्वकमिति षडध्वन्यासः दीक्षा-
विधैद्रष्टव्य. अत्रैत्रेशावास्योपनिषद्वाक्यं प्रमाणत्वे-

नोपन्यस्यति तेन त्यक्ते न भुञ्जीथा इति तेनलिङ्गात्मना परमेश्वरेण त्यक्ते त्वच्छरीरेण विभागे जाते नभुञ्जीथा अन्यस्य धनं शिवलिङ्गरूपं मागृधः न कामय स्वेत्यर्थः ।

ननु "नारायणोपि भगवान् देवकीतनयोहरिः । ततस्सभगवान् जज्ञे ब्रह्मा लोकपितामहः । सनत्कुमारो भगवानित्यादिषु" देवर्षिसाधारण्येन प्रयुज्यमानस्य भगवच्छब्दस्य कथं शिवलिङ्गपरत्वमिति चेन्न ।

देवर्षिसाधरण्येनेति ततश्चायं मे हस्तो भगवानित्यादौ ब्रह्मसनत्कुमारादीनां भगवत्पदेन प्राप्तिरस्तीत्याशयः ।

हस्तेनावद्यतिस्रुवेणावद्यति स्वधितिनावद्यतीत्यत्र अवदानमात्रसाधारणस्यावद्यतीत्यस्य हस्तादिलिङ्गसाचिव्येन तत्तत्पुरोडाशावदानादिपरत्ववत् प्रकृतेपि देवतान्तराणाम् ह-

स्तादिधारणाप्रसिध्या हस्तगतत्वालिङ्गेन भगवच्छब्दस्य शिवलिङ्गपरत्वावश्यम्भावात्।

तत्तत्पुरोडाशावेति अवद्यतीत्येकानुपूर्वीकपदश्रवणेपि हस्तस्रुवस्वधितिपदानां भिन्नार्थकानां समभिव्याहारबलाद्योग्यताबलेन हस्तेन पुरोडाशस्य स्रुवेण घृतस्य स्वधितिना मांसस्य पृथक्पृथगवदानं प्रतीयते एवमिहापि भगच्छब्दस्यसाधारण्येपि हस्तपदसान्निध्याद्धस्तधृतशिवलिङ्गपरत्वमिति समाधानग्रन्थाशयः।

किञ्चायं शिवाभिमर्शन इति वाक्यशेषेणायं मद्धस्तगतो भगवान् शिव इत्यभिमृश्यते परामृश्यत इति शिवाभिमर्शनः शिवपदोपस्थाप्यइति यावदित्यर्थकेन यवव्रीह्यधिकरणन्यायेन भगवत्पदस्य शिवलिङ्गपरत्वनिश्चयाच्च।

'यवव्रीह्यधिकरणन्यायेनेति, व्रीहिभिर्यवैर्वा

यजेतेत्यत्रयवशब्दस्य म्लेच्छेषु प्रियंगौ आर्येषु दीर्घशूकेच प्रयोगदर्शनात् कस्यार्थस्य प्रकृते ग्रहणं कार्यमिति जिज्ञासायां "यत्रान्या ओषधयोम्लायन्ते अथैतेमोदमानास्तिष्ठन्तीति वाक्यशेषेण दीर्घशूकस्यैवग्रहणं निर्णीयते एवमिहाप्ययं मेशिवाभिमर्शन इति वाक्यशेषबलाद्भगवच्छब्देन शिवएवगृह्यत इति भावः

एवं हस्तादौलिङ्गधारणं विधाय तस्यलिङ्गस्य सृष्ट्यादिकर्तृत्वेनार्थवादः क्रियते। तत्रायं माता अयं पितेतिसृष्टिकर्तृत्वमभिधीयते। अयंविश्वभेषज इत्यनेन विश्वस्य भवस्य भेषजः संसाररोगनाशक इत्यर्थकेन संहारकर्तृत्वं प्रतिपाद्यत इति।

संहारकर्तृत्वमिति मध्येमध्ये प्रारब्धोपस्थापितनानाविधदुःखात्मकरोगशामकत्वेनपालनकर्तृत्वमपि भेषजत्वोक्त्या बोध्यते।

नन्वयं शिवाभिमर्शन इत्यत्रेदंशब्देन प्रागुक्तहस्तः परामृश्यते शिव-

मभिमृशति चन्दनलेपनादिना स्पृशतीतिशिवाभिमर्शनः तथा च दारुपीठादौ बाणमरकतलिङ्गाद्यर्चनाकाले दक्षिणहस्तस्य चन्दनलेपपूजानिवेदनादिविनियुक्तस्यात्यन्ताभ्यर्हितस्यायं मेहस्तोभगवानित्यादिना भगवत्त्वमातृत्वपितृत्त्वादिनार्थवादः क्रियत इति नायं मन्त्रोहस्तादौ लिङ्गधारणविधायकइति चेन्नैवं। हस्तस्याचेतनत्वेन तत्र भगवत्वमातृत्वपितृत्वादिसंबन्धासंभवेनोक्तरीत्यासमवेतगुणसम्बन्धबोधकत्वेसम्भवत्यसमवेतगुणसम्बन्धबोधकत्वाङ्गीकारस्य जघन्यत्वात्।

'असमवेतगुणेति, आरोपितगुणेत्यर्थः।

अत एव सोमः पवतेर्जनितामतीनामित्यादौ सोमलतायाः मन्त्रो-

क्तगुणसम्बन्धाभावेन समवेतसम्बन्ध-
बोधनार्थमुमयासहित स्सोमइति श्लेष-
महिम्नापरमशिवाभिव्यञ्जनमिति ग्र-
न्थकृतां लेखनमपि सङ्गच्छते ।

मन्त्रोक्तगुणसम्बन्धाभावेनेति कथञ्चित्सम्ब-
न्धोपपादनेपि जडरूपस्तुतौ वैयर्थ्यनेत्यपिबोध्यम् "अतएवसोमः पवतेर्जनितेति, यद्यपि तत्तदधिष्ठा-
तृदेवताप्रसादाभिप्रायेण कुशादीनां जडानामपि प-
वित्रस्थो वैष्णव्यावित्यादिना स्तुतिर्दृश्यते तथापि मातृत्वपितृत्वादीनां तत्रबाधितत्वादुमयासहित इति व्युत्पत्त्यासर्वासां स्तुतीनां जलसमुद्रन्यायेनैका-
धारभूतस्य परमेश्वरस्योपस्थितिसम्भवेन तादृशक्लि-
ष्टकल्पनाया अनौचित्यादिति भावः ।

इदं पूर्वमेवव्याख्यातम् अयं शिवेत्यत्र इदं पदेन हस्तपरामर्शेति कैमुतिकन्यायेनेति गंधले-
पादिनाकिंचित्स्पर्शवतः पुरुषस्यदत्तहस्तस्यएवम्स्तु-
त्यत्वे यावत्पूजाकालम् साक्षात् शिवलिंगाधिकरण भूतस्य वामहस्तस्यप्रायः सर्वदैवतद्धारकस्य कण्ठा-
द्यवयवस्यच अर्थात् स्तुतिः सिद्धाभवतीत्याह 'कि-
ञ्चेत्यादिना,

किञ्च निखिलभुवनभवनपालन-

विलयनलीलाधुरंधरशिवलिङ्गस्य दारुपीठाद्यर्चनासमये कदाचित् स्पर्शनमात्रवत एव हस्तस्याभ्यर्हितत्वेन स्तुतिविषयत्वे ऽस्मदुक्तरीत्याऽविभाज्यसम्बन्धेनानन्तकल्याणगुणमणिगणरत्नाकरशिवलिङ्गाधिकरणस्य तस्य कैमुतिकन्यायेन स्तुत्यतासिद्धेस्तत्पक्षेपि लिंगधारणपरत्वानपायात् । शिवमभिमृशतेऽविभाज्यसम्बन्धेन सदास्पृशतीति शिवाभिमर्शनः एवं भूतामे हस्तः भगवान्मातापितेत्यादिनास्तोतुं शक्यत्वादिति ।

नचास्मन्मते चन्दनलेपनादावभ्यर्हितदक्षिणहस्तस्यैवोपयोगेन स्तुतिसंभवः भवन्मते तु वामहस्तस्यधारणाधिकरणत्वेन न तत् सम्भव इति वाच्यं ।

वामहस्ताभ्यर्हितत्वस्य पूर्वमेव साधितत्वात् । संस्कृत्यगुरुणादत्त मिष्टलिङ्गमतन्द्रितः । नित्यं स्ववामहस्ताग्रेसावधानेन पूजयेदिति शङ्करसंहितावचनेन तत्र धारणपूजादियोग्यताया आवश्यकत्वाच्चेति ।

अस्मिन् मत इति इदं पदेन विलेपनादिदातृहस्तपरिग्रहणमते भवन्मत इति, कैमुतिकन्यायावतारयितृमते,

ननुशाखाभेदेन सर्वलिङ्गंस्थापयतीत्यनेनान्यथासिध्यभावेसमानशाखापठितपवित्रन्तेविततमिति मन्त्रेविहितस्यैव लिङ्गधारणस्यानेन विधानेन्यथासिद्धिर्दुर्वारैवेति चेन्नैवं ।

'अन्यथासिद्धिरिति, पवित्रन्तेविततमिति मन्त्रस्यायं मे हस्त इति मन्त्रस्य चैकशाखापठितत्वेनशाखाभेदोक्त्याऽन्यथासिद्धिर्वारयितुं न शक्यत इति भावः ।

पवित्रमिति मन्त्रेण सामान्यतश्शरीरे लिङ्गधारणविधाने शरीरेऽपि कुत्रधार्यमित्याकाङ्क्षायां अयं मे हस्तो भगवानिति मन्त्रे हस्तरूपाधिकरणविधानेऽन्यथासिद्ध्यभावादिति । पूर्वाचार्यास्तु अयम् हस्तश्शिवमभितस्सर्वदास्पृशतीति शिवाभिमर्शनः तथा च सार्वकालिकशिवस्पर्शस्य धारणं विनानुपपद्यमानत्वाद्धस्तादौ तत्सिद्धिः ।

प्रथममन्त्रेणधा रणसामान्यं द्वितीयेन हस्तरूपाधिकरणं विधीयत इति नान्यथासिद्धिरित्युत्तरम् ।

शिवाभिमर्शनपदेव्यापकत्वार्थकाभिशब्देन स्पर्शे सार्वकालिकत्वबोधनात् सार्वकालिकस्पर्शस्य च धारणं विनानुपपत्या श्रुतार्थापत्तिप्रमाणेन लिङ्गधारणं सिध्यतीत्येषामाशयः । अभिशब्देनाभितः सर्वत इति व्याख्यानानुरोधेन दैशिकव्याप्तेरेव प्रत्यायनं तथाविधस्पर्शस्य च भूम्यादिप्रतिष्ठितलिङ्गेऽपि सम्भवेन न तद्धारणं सिद्ध्यतीत्याशङ्कते 'न चेति' ।

न चाभितइत्यस्य सर्वभागाव-च्छेदेनेत्यर्थात्तथाविधस्पर्शस्य भूम्या-दिप्रतिष्ठितलिङ्गस्यापि सम्भवेन नलि-ङ्गधारणसिध्दिरिति वाच्यम् ।

अभितइत्यस्य देशकालोभयार्थक-त्वेहस्तादिधृतलिङ्गस्यैव तथा विधस्प-र्शसम्भवेन लिङ्गधारणसिद्धिः । येनका-रणेन शिवाभिमर्शनः अतएवजीवातु-र्जीवनौषधं । मेहस्तः हेसुबन्धो परम-शिव तवेदं प्रसर्पणमनुसरणमगमत्स्मा-त्सः । तेनमेहस्तम् एहिधृतस्सन् सर्वदा तिष्ठ । तथा च दक्षिणहस्तस्य शिव-पूजाकरणत्वेनेतरहस्तस्यतदधिकरण-त्वेन च सार्वकालिकशिवस्पर्शविशिष्टः करोभ्यर्हित इति भगवत्त्वमातृत्वपितृ-त्वादिनास्तुतिरुपपद्यते सर्वदाशरीर-

स्य शिवलिंगसम्बन्धे शिवस्वरूपत्वंचकै-
मुतिकन्यायसिध्धं । प्राणलिङ्गाङ्गसम्ब-
न्धीसकृद्वो नात्रसंशय इत्युक्ते: । अहो
लिङ्गधारणमाहात्म्यं हस्तद्वयस्य पूजा
तदधिकरणत्वविनियुक्तत्वेन सर्वशरी-
रस्याप्याचारादिलिङ्गस्थानत्वेन च सर्व-
मपि शरीरं शिवार्थमिति प्रशस्त-
मित्याहु: ।

हस्तादिधृतलिङ्गस्यैवेति भूम्यादिप्रतिष्ठितेतु सर्वावयवावच्छेदेन स्पर्शो नसम्भवतीति भाव: ।

अयं चासम्भव:, अभितइत्यस्य कालिकव्याप्त्यर्थकत्वे दैशिकव्याप्त्यर्थकत्वे उभयविधव्याप्त्यर्थकत्वे च भूमिष्ठलिङ्गेद्रष्टव्य: सुबन्धो इति वस्तुत: परमशिवस्यैव त्रैकालिकसंबन्धित्वात् सुबन्धुत्वम् कैमुतिकन्यायेति, दण्डापूपन्यायेत्यर्थ: तत्स्वरूपन्तु येनहस्तिना दण्डोभक्षित: तेनापूपं किमुतभक्षयितुं न शक्नोत दण्डभक्षकेनापूपमनायासेन भक्ष्यतइति भाव: एवमिहापि हस्तस्य शिवलिङ्गपूजायां करणत्वमात्रेण भग-

षद्रूपत्वप्राप्युक्तौ सर्वदाशिवलिङ्गसम्बन्धिशरीरे शिवत्वप्राप्तिर्भविष्यत्येवेति भावः ।

अस्याः श्रुतेरुक्तार्थे "यावज्जीवमिदंदत्तमिष्टलिङ्गं समर्चयन् । कराब्जपीठेविन्यस्य तद्ध्यानासक्तमानसः । हस्तलिङ्गाङ्गसंबन्धीसदानंदाह्वयोमुनिः । सर्वोपनिषदर्थज्ञशिवध्यानपरायणः॥

'अस्याः श्रुतेरुक्तार्थ इति, अस्योपोद्बलकानीति दूरस्थेनान्वयः 'सदानन्दाह्वयोमुनिरिति, सदानन्दनामकमुनिर्यावज्जीवमिष्टलिङ्गं कराब्जपीठेविन्यस्य समर्चयन् मुक्तोजातइतिशेषः ।

एवं षट्स्थलनिर्णयं शिवपदप्राप्त्यैकहेतुं सदा । यस्सेवेत कराब्जपीठनिहितश्रीकण्ठलिङ्गार्चकः ॥ सज्ज्ञानीसपुरातनस्सचमहान् माहेश्वरेषूत्तमोमर्त्यस्तेन जगत्त्रयेपि सदृशोविद्येत देवोपिवा ॥

षट् स्थलानि शैवागमेप्रसिद्धा.नि ।

लिङ्गमन्त्रोपदेशश्चक्रपीठार्चनं जपः । मल्लिङ्गंधारणंत्वत्रलोकाचारप्रवर्तनमित्यादिशंकरसंहिताकिरणागमवचनान्युपोद्बलकान्यनुसंधेयानि ॥

अपिच ॥ त्रिपुण्ड्रं येविनिन्दन्तिनिन्दन्तिशिवमेवत इतिजाबालोपनिषद्वाक्यमपितद्विषयकं भवति ॥ तत्रहि "नेक्षेतपूजावेलायां नरं वत्सबहिष्कृतं । दधीचिना गौतमेनयेशप्ता ब्राह्मणाधमाः । कलाववतरिष्यंतिनिन्दकास्ते बहिष्कृताः । ब्रह्महत्यासुरापानस्वर्णस्तेयकृतः पुरा । बहिर्नरा भविष्यन्तिकलावीश्वरनिन्दकाः ॥ इति शिवनिन्दकानां पापात्मनां बहिष्कार्यत्वप्रतिपादनेन तन्निंदायाः पापहेतुत्वमेवतत्सादृश्यं त्रिपुण्ड्रनिंदायाः प्रतिपादितं ॥ लिङ्गधारणाक्यं नामव्रतं

माहेश्वराभिधं । येधारणं प्रकुर्वन्ति तेयान्तिपरमाङ्गतिमित्युपबृंहणानुरोधेन लिङ्गधारणस्य मोक्षासाधारणकारणत्वमवधार्य तदौपम्यं त्रिपुण्ड्रधारणस्याभिहितं तत्रसादृश्यं नामतद्भिन्नत्वेसतितद्गतभूयोधर्मवत्त्वम् । यथाधैर्येण हिमवानिवेत्यादौ हिमवद्भिन्नत्वे सतितद्गतधैर्यादिधर्मवत्त्वमुपमेये तथा प्रकृते लिङ्गधारणभिन्नत्वेसति तद्गतमुक्तिजनकत्वादिधर्मवत्त्वं त्रिपुण्ड्रधारणेवक्तव्यम् एवं सतिसद्भ्यां प्रतियोग्यधिकरणाभ्यां अभावोहिनिरूप्यत"इति न्यायेन प्रतियोगिप्रसिध्धिं विनाऽभावप्रसिद्ध्ययोगेनालंकारिकमते उपमालंकारस्थले उपमानप्रसिद्धेरावश्यकत्वाच्च लिङ्गधारणसिध्धिः ॥

नचधैर्येणहिमवानिवेत्यादौसादृ-
श्यवाचकेवशब्दसत्त्वेनतथात्वेपिप्रकृते
तदभावान्नसादृश्यघटकभेदप्रतियो-
गितया लिङ्गधारणसिध्धिरिति वाच्य-
म् इवादिशब्दाभावेपिवाक्पटुत्वे बृह-
स्पतिरित्यादाविवगम्यमानसादृश्यघ-
टकभेदप्रतियोगितयातत्सिध्धेः ।

"तत्सादृश्यंत्रिपुण्ड्रनिन्दायाः प्रतिपादित-
मिति 'त्रिपुण्ड्रं ये विनिन्दन्ति निन्दन्तिशिवमेवते'
इत्यनेन त्रिपुण्ड्रनिन्दायाः शिवनिन्दातादात्म्यं ।
बोधयता त्रिपुण्ड्रशिवयोरैक्यबोधनद्वारा "लिङ्गधा-
रणकं नामव्रतं माहेश्वराभिधम् । ये धारणंप्रकुर्व-
न्तितेयान्तिपरमाङ्गतिमित्युपबृंहणोक्तस्य मोक्षा-
साधारणकारणभूतस्यलिङ्गधारणस्य सादृश्यं त्रिपु-
ण्ड्रधारणेबोध्यते सादृश्यस्य च प्रसिद्धप्रतियोगिक-
त्वनियमेन तदनुरोधेनापि लिङ्गधारणं सिद्धमित्यु-
पपादयति अपिचेत्यादिना ।

लिङ्गधारणसिद्धेरित्यन्तेन यत्प्रायः श्रूयते यच्चे-
त्यादिना, एवंत्रिपुण्ड्रधारणलिङ्गधारणयोः व्यञ्जनया

तादात्म्येबोधिते उपमानोपमेयभावस्य फलनादुपमानालंकारानुरोधेनापि लिङ्गधारणं सिध्यतीत्याह,

अलङ्कारिकमते इति, इवशब्दंविनापि सादृश्यंप्रतीयते इत्याह 'वाक्पटुत्वेबृहस्पतिरिति त्रिपुण्ड्रंयेविनिन्दन्तीत्यत्रदृष्टान्तालंकारोपगमेपि तत् सिद्ध्यतीत्याह यद्वेति,

यद्वादृष्टान्तालङ्कारोवात्रस्वीक्रियते ॥ तथापि लिङ्गधारणसिध्धिर्दुर्वारैव॥ चेद् बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलंकृतिरितिलक्षणेवस्तुतः भिन्नयोः परस्परसादृश्यादभिन्नयोः पृथगुपादानम् बिम्बप्रतिबिम्बभाव इति तस्यापि भेदगर्भितत्वेन प्रतियोगिविधया लिङ्गधारणप्रसिध्धेरावश्यकत्वात् ॥ नन्वेतावता शिवस्य धारणसिध्धावप्यन्तर्धारणेनैव चरितार्थत्वान्नबाह्यधारणसिध्धिरिति चेन्मैवम् ॥

यत्प्रायश्रूयते यच्च तत्तादृगवग-

स्यत इति न्यायेन भस्मनोबहिश्शरीर-
धार्यत्वेनोपमानभूतशिवलिङ्गस्यापि
तथात्वसिध्धेः ॥ एतत् समानार्थक-
कालाग्निरुद्रोपनिषदादिष्वपि तत्
सिध्धः । तत्र या चास्य प्रथमारेखे-
त्यादिनात्रिरेखाणाम् महेश्वररुद्रस-
दाशिवात्मकत्वम् प्रतिपाद्य धार-
णाविधानेन शिवस्वरूपत्वेन तासा-
मेव धारणत्वे साक्षाच्छिवधारणस्य
कैमुतिकन्यायसिध्धत्वादिति ॥

तस्यापिभेदगर्भितत्वेनेति, बिम्बप्रतिविम्बभा-
वस्यापिभेदघटितत्वेनेत्यर्थः अन्तर्लिङ्गधारणमादाय-
प्रति योगिप्रसिद्धौ सन्तोषेनैव कर्त्तुं, शक्यत इत्याह
यत् प्रायमिति यत्प्रायमित्यस्यार्थस्तु यत्प्रतियोगिक-
सादृश्यवद्यत्श्रूयते तत्प्रतियोगिक सादृश्यवत्तदपि-
गम्यते अर्थादुपमेयेउपमानस्येवोपमानेप्युपमेयस्य सा-
दृश्यंतुल्यवित्तिवेद्यतयाप्रतीयत इतिभावः ।

श्रीशिवायनमः लिङ्गाङ्गसम्बन्ध-

स्वरूपमहावाक्यार्थबोधकतत्वमसि अहम् ब्रह्मास्मीति वाक्यद्वयेनापिलिङ्गधारणासिध्धिर्निष्प्रत्यूहैव ननुतत्वमसीत्यत्राविद्योपहितम् ब्रह्मैव जीव इति श्रुतिप्रतिपन्नाविद्योपाधिकदेहेन्द्रियाद्यवच्छिन्नस्सांसारिको जीवस्त्वम् पदवाच्यः ॥ "मायान्तुप्रकृतिंविन्द्यान्मायिनंतुमहेश्वरमिति श्रुत्यवगमित मायोपाधिकनीलकंठ" चन्द्रशेखरत्वादिमाङ्गल्यगुणकसर्वज्ञतादिषडङ्गविशिष्टः परमशिवस्तत्पदवाच्यः ॥ एवम् विरुध्धधर्माध्यस्तयोरुभयोरभेदबोधासम्भवेन तत्वं पदयोर्विशेषणविनिर्मुक्तचैतन्यलक्षकत्वमङ्गीकृत्याऽभेदोबोध्यत इत्यभ्युपेतव्यं अहम् ब्रह्मास्मीत्यत्राप्येवमेव । तत्रचनलिङ्गाङ्गसम्बन्धबोध इति चेत् ।

'इतिश्रुतीति,इयं श्रुत्याऽऽनुपूर्वीसम्यगन्वेषणे क्रियमाणे मिलिष्यतीत्यस्मालखादनुमीयते एवं "एकमेवाद्वितीयंब्रह्मेति" श्रुतिसहकृतात् "द्वासुपर्णासयुजासखायासमानं वृक्षंपरिषस्वजाते तयोरेकः पिप्पलं स्वाद्वत्यनश्नन्नन्योऽभिचाकशीतीतीयमपि" श्रुतिरत्र-द्रष्टव्या अत्रप्रथमश्रुत्या ब्रह्मात्मैक्ये वोधिते द्वितीय-श्रुत्याबोध्यमानस्य जीवब्रह्मणोरभेदस्याविद्योपाधिं विनानुपपत्तेः 'अभेदबोधासंम्भवेनेति, यद्यप्यभेदबोधे प्रकारतावच्छेदकविशेष्यतावच्छेदकयोर्भेदोपि तन्त्रम् यथानीलो घटइत्यत्र नीलत्वघटत्वयोः अतएव घटो-घट इत्यादौनाभेदबोधइति जीवब्रह्मणोरुपाध्योर्भेदे-नाभेदबोधस्य प्रतिकूलः अपितूक्तदिशाऽनुकूलएवभ-वति तथापि तयोः सर्वज्ञत्वाल्पज्ञत्त्वयोर्विरुद्धत्वाद्भा-गत्यागलक्षणोपादीयते नीलत्वघटत्वयोर्भिन्नत्वेपि विरुद्धत्वाभावान्नतादृशलक्षणापेक्षा।

अभिप्रायमनवगतवानसि अहो लिङ्गाङ्गसामरस्यविधुराणाम् सौख्यम् स्कान्दकामिकादिपुराणागमतत्ववेदिनाम् नैतच्चोद्यम् चमत्कारं करोति॥ तत्र कोऽहऽमिति शिष्यस्य प्रश्ने

गुरुणा हस्तमस्तकसंयोगरूपवेधादी-
क्षया योगाङ्गापरनामककारणाङ्गाव-
च्छिन्नेचजीवे भावलिङ्गं संयोज्य भो-
गाङ्गापरनामक सूक्ष्माङ्गावच्छिन्ने मनु-
दीक्षया प्राणलिङ्गं संयोज्य त्यागाङ्गा-
परनामकस्थूलाङ्गावच्छिन्ने क्रियादी-
क्षयेष्टलिङ्गं योजयित्वा तत्वमसीत्युक्तम्
तच्छ्रुत्वा शिष्यस्तु "लीनङ्गच्छतियस्मि-
न् सामायादुर्घटकारिणी॥ तल्लिङ्गमिति
सन्मात्रं रूप्यतेपारमार्थिकैः ॥ एतस्मात्
कारणादेव लिङ्गरूपत्वमीशितुरिति-
शङ्करसंहितावचनानुरोधेन मायोपा-
धिकलिङ्गरूपशरीरावच्छिन्नो ब्रह्मैवत-
त्पदवाच्यः॥ अमिति ब्रह्मसन्मात्रं गच्छ-
तीति गमुच्यते ॥ रूप्यतेऽगमिति
प्राज्ञैरङ्गतत्वविचिन्तकैः ॥ तस्मादङ्ग-
स्वरूपोसौ जीवस्संसारवृत्तिभागिति-

वचनानुरोधेन हराद्युपासनाविशेषैर विद्यापटलध्वंसे अमू ब्रह्मणाम् परमभिवङ्गच्छतीत्यङ्गम् त्वंपदवाच्योजीवः ॥ अङ्गपदस्य शरीरवाचित्वेऽपि यस्य चात्माशरीरं यस्याव्यक्तंशरीरमिति श्रुत्या ब्रह्मणोजीवशरीरकत्वेनाङ्गम् शरीरभूतम् जीवस्त्वं पदवाच्यः ॥ लिङ्गाङ्गरूपयोर्यौसौ संयोगश्शिवजीवयोः । एतत् स्वरूपं सुदृढः सम्बन्ध इति सम्मतः ॥ इतिवचनेन सम्यग्योगः संयोग इति व्युत्पत्त्या जीवब्रह्मैक्यापरनामकनीरनीरसंयोगवत् अविभाज्यसंयोगोऽसिपदवाच्यः ॥

लिङ्गाङ्गसामरस्येति, सामरस्यं, एकरसत्वम्, परस्परनित्यसम्बन्धित्वमितियावात् ।

स्कान्दकामिकादिपुराणागमतत्ववेदिनामिति अयमेतत् प्रकरणसारांशः लिङ्गाङ्गसम्बन्धएव तत्व-

मसीतिवाक्येनोच्यते लिङ्गपदस्य तत्पदेनाङ्गपदस्य चत्वं पदेनसमानार्थकत्वात् 'लीनङ्गच्छतियस्मिन् सा माया दुर्घटकारिणी' इतिव्युत्पत्या लिङ्गपदेन सन्मात्रं ब्रह्मतत्वमुच्यते अम् ब्रह्म गच्छतीति व्युत्पत्या अंगपदेन जीवात्मा उच्यते इत्युभयोर्वाक्ययोः समान-तात्पर्यकत्वमुपपद्यते एतदुपादानार्थमेवागमस्थो गुरुशिष्यसम्वादो बोधयते तत्रकोहमिति प्रश्ने गुरुणा शरीरत्रये लिङ्गत्रयं योजयित्वा तत्वमसीत्युत्तरमुक्तम् ब्रह्मात्मकलिङ्गस्य त्रिषुशरीरेषु योजितत्वात् ब्रह्मस्वरूपे त्वं सम्पन्नोसीत्युत्तरवाक्यस्य तात्पर्यम् अत्र योगाङ्गभोगाङ्गत्यागाङ्गशब्दाः जीवोपाध्यर्थकाः तत्राविद्यावच्छिन्नस्यप्राज्ञस्य जीवस्योपाधिभूताविद्या कारण शरीरं योगाङ्गपदेनाच्यते तस्मिन् शरीरे हस्त-मस्तकसंयोगरूपवेधादीक्षया भावलिङ्गस्य योजनम् गुरुणाक्रियते एवं पंच कर्मेन्द्रिय पञ्च ज्ञानेन्द्रिय पञ्च-प्राणमनोबुद्धिरूपसप्रदशतत्वात्मकलिंगशरीरावच्छिन्नतैजस्यस्य जीवस्योपाधिभूतं लिङ्गशरीरं भोगाङ्ग-मित्युच्यते तस्मिन् मनुदीक्षया प्राणलिङ्गस्य संयोजनं क्रियते एवं विश्वाख्यजीवस्योपाधिभूतस्थूलशरीरं त्यागाङ्गमुच्यते तस्मिन्निष्टलिङ्गस्य योजनं क्रियते एवं शरीरत्रये लिङ्गत्रययोजनोत्तरं तत्वमसीति शिष्य-मुद्दिश्य गुरूक्तिरियम् । 'तस्मादङ्गस्वरूपोसो जीवः

संसारवृत्तिभाक्' 'तस्मात्, ब्रह्मकर्मकप्राप्तिकृतत्वा-
दिति, 'अंगपदस्य शरीरवाचित्वेऽपीति, रूढिशक्त्येति
भावः ततश्चाङ्गपदार्थस्य ब्रह्मणः सहाभेदोबाधित
इत्यर्थापिसूचितविरुद्धांशः 'यस्यचात्माशरीरमिति-
"य एव आत्मनि तिष्ठन्नात्मानमन्तरोयमयति यस्य
चात्माशरीरं यमात्मनं वेदेत्यन्तर्यामिब्राह्मणेन पृथि-
व्यादिजीवात्मपर्यन्तस्य सकलस्य वस्तुजातस्य ब्र-
ह्मशरीरत्वबोधनात् ब्राह्मणेनशरीरेणात्मनो ब्रा-
ह्मणत्वब्राह्मणाभेदव्यवहारवत् ब्रह्मणःशरीरभूतेन
जीवात्मना ब्रह्मणोपि जीवाभेदव्यवहारोनानुपप-
न्नोभवतीति विशिष्टाद्वैतसिद्धान्तमाश्रित्यैतत्प्रकर-
णप्रवृत्तिर्द्रष्टव्या एवं जीव ब्रह्मणोःशरीरभावेनाभेद-
बोधकत्वमुपपाद्य चराचरस्य सम्पूर्णस्य जगतो ब्रह्म-
णासहाभेदबोधपरत्वं व्याख्यातुमुपक्रमते। अथवेति

अथवा॥ विग्रहं देवदेवस्य ज-
गदेतच्चराचरम्। एतमर्थम् न जान-
न्तिपशवः पाशगौरवादितिरीत्या ब्र-
ह्मशरीरभूताङ्गपदवाच्यसकलचराच-
रप्रपञ्चस्त्वम् पदार्थः लिङ्गाधिष्ठितप-
रमशिवस्तत्पदार्थः तयोरविभाज्य-

योगोऽसिपदार्थ इति बुद्ध्वा लिङ्गाङ्गप-
दार्थाभिन्नयोस्तत्वम् पदवाच्यार्थयो-
र्विरुध्धधर्माध्यासेनाभेदासम्भवात्त-
त्वम् पदलक्ष्यार्थयोरेव अभेदइति वि-
जानाति । तदनन्तरमहम् ब्रह्मास्मीत्य
खण्डमहावाक्यार्थमनुभवन् जीवन्मु-
क्तो भविष्यतीति । यावदुक्तार्थबोध-
कानि तु वचनानि स्कान्दलैङ्गादि-
पुराणेषु वातुलोत्तरभागेऽनुभवसूत्रे-
वीरागमादौ च । "सोहमित्यब्रवी-
द्देही गुरुम् परमकारणम्" ॥ गुरुस्त-
त्वमसीत्याह सत्यार्थम् करुणानिधि-
रित्यादीनि बहूनि सन्ति ग्रंथविस्त-
रभयान्नेहविलिख्यंते ॥ लिङ्गाङ्गसंयो-
गपदार्थानाम् तत्वमसीत्यादिपदा-
र्थानां चाभेदबोधकानि कानिचिदु-
दाह्रियन्ते ॥ तथाहिस्कांदेशंकरसंहि-

तायाम् लिङ्गं किमङ्गमिति किम्
सम्बन्धः कोयमेतयोः। लिङ्गाङ्गसम्ब-
न्धपदान्येवमेवविचिन्तयेत् ॥ लिङ्ग-
रूपोमहादेवस्सच्चिदानन्दलक्षणः ॥

'विग्रहंदेवदेवस्येति, अस्मिन् पक्षे ब्रह्मशरीर-भूतः सकलचराचरप्रपञ्चस्त्वंपदार्थः लिङ्गाधिष्ठितपरमशिवस्तत्पदवाच्यः तयोरविभाज्यसम्बन्धोऽसिपदेनोच्यते एवं तत्त्वं पदार्थयोरविभाज्यसंयोगेन कीटभ्रमरन्यायेन जीवेशिवत्वप्राप्त्यनन्तरं क्रमेणाद्वैतवेदान्तिनामभिमतवास्तविकाभेदोपि सिद्धोभवतीत्याह, तत्वंपदलक्ष्यार्थयोरेवाभेद इति, 'विजानातीति' अत्रविजानातीत्युक्त्या वस्तुतोऽखण्डत्वमिदानीमपि नभवतीति सूच्यते ततश्च चिदंशस्यैकरसत्वेनस्वात्मनि ब्रह्मरूपताद्दृष्टिम् प्राप्नोतीतिलभ्यते फलंच जीवन्मुक्तत्वलाभइत्याह 'अहं ब्रह्मास्मीत्यखण्डमहावाक्यर्थमनुभवन् जीवन्मुक्तोभविष्यतीति, लिङ्गाङ्गेति क्रमेणान्वयोऽत्रद्रष्टव्यःलिङ्गतत्पदार्थयोरङ्गत्वंपदार्थयोः संयोगाऽसिपदार्थयोश्च यथासंख्यमन्वयोबोद्धव्यः।

अङ्गरूपोहिजीवात्मा भवभावनियं-
त्रितः ॥ तत्पदेनोच्यते सद्भिर्लिङ्गरूप-

स्सदाशिवः ॥ त्वम् पदेनाङ्गरूपोहि-
जीवस्संसारलक्षणः ॥ त्वमर्थोऽङ्गस्वरू-
पोयस्सोऽहम् शब्दार्थ एव हि। त्वमहम्
पदलक्ष्यार्थश्चिद्रूपः परमेश्वरः ॥ त्वम-
हम् पदवाच्यार्थस्यैवदेहादिवस्तुनः
न तच्छब्दार्थतास्यैव विरुध्धत्वात् स-
दैवहि। त्वमहम्पदलक्ष्यार्थोजीवात्मा
चाङ्गरूपकः। अशिवश्चेत् सदानन्द-
स्ततोमैवविलोकयेत् ॥

'भवभावनियन्त्रितइति, संसारवासनाबद्धइ-त्यर्थः अस्मिन् प्रकरणे लिङ्गरूपोमहादेव इत्यारभ्य लक्ष्यार्थं लक्षयित्वातमित्यन्तैर्वातुलागमवाक्यैस्त"त्व-मसि" 'सोऽहमस्मी' त्येतन्महावाक्यघटकपदार्थानां लिङ्गाङ्गसंयोगपदार्थस्यैवमुक्तवाक्ययोर्विशिष्टार्थस्यलि ङ्गाङ्गसंयोगात्मकविशिष्टवाक्यार्थेवारंवारमभेदभावनं सविलासाऽविद्यानिवृत्तिहेतुभूतं प्रत्येकपदार्थतत्त्वनि-श्चयपूर्वकमुपदिश्यते एवं प्रकाशिततात्पर्यकस्यास्य प्रकरणस्य कानिचिद्वाक्यानि व्याख्यायन्ते "त्वमर्थोऽ-ङ्गस्वरूपोयः सोहं शब्दार्थ एव हि अयं भावः तत्त्व-

मसीत्यत्र त्वं पदार्थः लिङ्गाङ्गसंयोगइत्यत्राङ्गपदार्थः सोऽहमस्मीत्यत्राहं शब्दार्थश्चैक एव लक्ष्यार्थादर्श्यते "त्वमहंपदलक्ष्यार्थश्चिद्रूपः परमेश्वर" इति अत्र सोऽहमस्मीत्यहंपदेनाहं गच्छाम्यहं तिष्ठामीत्यादिलौकिकवाक्यस्याहं शब्दार्थप्रतिपादने विवक्षिते त्वमहंपदलक्ष्यार्थइत्युत्तरार्धं विरुध्यते लौकिकवाक्यस्याहं पदस्य लक्ष्यार्थे तात्पर्याभावादिति सोऽहमस्मीति श्रौतवाक्यस्याहं शब्दमभिप्रेत्यव्याख्यातम् शक्यार्थस्याभेदः कस्मान्नभवतीति शङ्कामपाकरोति ,,त्वमहं पदवाच्यार्थस्यैव देहादिवस्तुनः न तच्छब्दार्थताऽस्यैव विरुद्धत्वात् सदैव हि" ननु त्वमहं पदाभ्यां स्थूलदेहोपलक्षितजीवमात्रं लक्षयितुमुचितम् तस्यैव परमात्मशरीरत्वात् ततश्च चिद्रूपपरमेश्वरस्य लक्ष्यत्वोक्तिरनुपदोक्ता न संगच्छत इत्यत आह "त्वमहंपदलक्ष्यार्थोजीवात्मा चाङ्गरूपकः अधिवश्चेत्सदानन्दस्ततोनैव विलोकयेदिति अत्र विलोकयेदित्यत्रकर्मणः कर्तृत्वविवक्षाबोद्धव्या। अधिगच्छतिशास्त्रार्थःस्मरति श्रद्दधाति चेतिवत् अयं भावः लक्ष्याऽङ्गरूपोजीवः अशिवश्चेच्छिवभिन्नश्चेत् तदाजीवात्मन आनन्दरूपत्वाभावान्मानभूवं हि भूयासमित्यात्मविषयकपरप्रेमसूचितात्मन आनन्दरूपतानदृश्येत दृश्यते त्वश्यं यद्वा नविलोकयेत् न चेतयेत् ब्रह्म

भिन्नस्यजडत्वादि तितात्पर्यम् इदं च परमानन्दत्व-
भानं सामान्यरूपेणैव भवतीतितस्मान्न सर्वथाशिवा-
द्भिन्नोजीवात्मासांसारिकविषयस्पृहाप्युपपद्यते त-
दुक्तं विद्यारण्यैः अभानेन परं प्रेम भानेन विषयेस्पृ-
हा तस्मादभानंभानेपि प्रतिबन्धेन युज्यते अध्येतृवर्ग-
मध्यस्थपुत्राध्ययनशब्दवदित्यादि" ।

जगच्चराचरं यत्तत्वं पूर्णम् चिदात्मकम् । शुद्धम् तदङ्गरूपोहि तत्त्वमर्थानसंशयः॥ तत्वम्पदार्थे लिङ्गाङ्गरूपेऽन्योन्यविरुद्धकम् । उपाधिकृतवाच्यार्थं त्यक्त्वासच्चितसुखात्मकम् ॥ लक्ष्यार्थमविरुद्धम् यच्छिवम् तदितियामतिः । सासंबन्ध इति प्रोक्ता वेदान्तागमवेदिभिः ॥

'जगच्चराचरमिति' चराचरस्य जगतः तत्त्व-
मात्मभूतमन्तर्यामीति यावत् शुद्धं पूर्णं चिदात्मकं
शिवस्वरूपमिति भावः शिवएव सर्वेषामात्मेति
भावः 'तदङ्गरूपोहीति, चराचरन्तुतच्छरीरभूत-
मित्यर्थः तत्त्वमसीत्यत्र कल्पद्वयं पूर्वमपिदर्शितम्
जीवस्त्वं पदार्थः परमात्मा तत्पदार्थ इत्येकः

कल्पः चराचरं जगत् त्वंपदार्थः परमात्मा पूर्ववदेव तत्पदार्थ इति द्वितीयः कल्पः तदेवकल्पद्वयं शङ्करसंहितावाक्येन दर्शितम् 'उपाधिकृतवाच्यार्थत्त्वेति उपाधिभिर्देवत्वमनुष्यत्वादिभिर्जीवात्मादेवमनुष्यादिरूपः कृताभवति वस्तुतस्तस्य देवत्वमनुष्यत्वादिकं नास्ति एवं तादृशोपाधिविशिष्टजीवैस्तत्तदुपाधिप्रापितजीवगतवैलक्षण्यैर्जीवानां देवमनुष्यादिरूपाणामन्तर्यामीन्द्रवरुणादिरूपतां मनुष्यादिरूपतां च प्रापितइवभवतीदमेवोपाधिकृतं रूपमुभयभागे द्रष्टव्यम् दलद्वयोपाध्योः परित्यागे सच्चित् सुखात्मकशिवांशस्यैवावशेषात् तावन्मात्रबुद्धिरभेददृष्टिरुच्यते तस्या एवाज्ञाऽनपटलध्वंसद्वारा परमपुरुषार्थसाधकत्वं न तु वस्तुतोजीवब्रह्मणोरभेदोऽस्मिन् मते विवक्षितः भक्तिपक्षस्य शैवशास्त्रसिद्धान्तत्वात् ।

लिङ्गरूपोमहादेवः पूर्णश्चैतन्यलक्षणः । भातियस्सोऽङ्गरूपोहम् जीवात्मास्मि न चापरः । योभातिचांगरूऽपोहम् जीवात्मापरमात्मनः । सोऽयमात्मा महादेवो लिङ्गरूपोमहेश्वरः ॥ योमायोपाधिकोदेवो लिङ्गरूपीसदा-

शिवः । सोऽविद्योपाधिकोभूत्वाभवत्य-
ङ्गस्वरूपवान् ॥ तत्पदेनोच्यतेलिङ्गम्
त्वम्पदेनाङ्गमीरितम् । अनयोरैक्य-
भावोयऽम् सम्बन्धोऽसिपदेन च ॥ इति
वाक्यानुसन्धानम् भासतेयस्यसन्ततम्।
गुरूपदेशाल्लिङ्गाङ्गसम्बन्धीतिसउच्यते।

एवम् लिङ्गाङ्गसम्बन्धभावना य-
स्यविद्यते । सयोगी सच सर्वज्ञोजीव-
न्मुक्तस्सउच्यते॥ लिङ्गाङ्गपदवाच्यार्थम्
हित्वासम्यग्धियापुनः । लक्ष्यार्थम्
लक्ष्ययित्वातम् सोऽहमेवेतिचिन्तयेत् ॥
लिङ्गाङ्गपदसम्भूतसम्यग्धीजन्ममात्रतः ।
अविद्यासहकार्येण नाभूदस्तिभविष्य-
तीति ॥

लिङ्गरूपोमहादेवइति, यश्चैतन्यस्वरूपो महा-
देवोलिङ्गरूपोभातितद्रूपोऽहमितिस्वस्मिन् परमात्म-
तादात्म्यभावनाप्रथमं कर्त्तव्यत्वेनोपदिश्यते 'योभा-
तिचाङ्गरूपोहमिति यःपरमात्मनोऽङ्गरूपोजीवोभाति

स महेश्वर एवेति लिङ्गरूपे महेश्वरे जीवात्मनोलय-भावनापूर्वभावनावैपरीत्येन द्वितीयाकर्त्तव्यत्वेनो-पदिश्यते 'योमायोपाधिकोदेवइति, शुद्धसत्वप्रधाना-विद्यासमष्टिः परमात्मन उपाधिभूता मलिनसत्वप्र-धाना व्यष्टिभूताऽविद्याजीवस्योपाधिभूता यथोक्तं पंचदश्याम् "सत्वशुद्ध्यविशुद्धिभ्यांमायाविद्याचसामता मायाविंबोवशीकृत्यतांस्यात्सर्वज्ञईश्वरः ॥ अवि-द्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधेति., तदेवास्मिन् पद्य उच्यते एवं मायोपाधिकोलिङ्गरुपीसदाशि-वः स एवाऽविद्योपाधिकोभूत्वाङ्गस्वरूपवान् जीव-स्वरूपो भवतीत्यर्थः इयं तृतीयभावना शिवयोगि-भिः कर्त्तव्यत्वेनोपदिष्टाद्रष्टव्या पूर्वं शुद्धयोः पर-मेश्वरजीवयोर्मध्येजीवेपरमेश्वररूपत्वं प्रकारद्वयेन भावनीयत्वेनोक्तम् परमेश्वर एवजीवो जीवः परमे-श्वर एवेति वस्तुतउभयोरपि भावनयोर्भावनीयं व-स्त्वेकमेव केवलमुद्देश्यविधेयभावमात्रं भिद्यते तृती-यभावनायान्तु कार्यकारणरूपेण तादात्म्यं भावनी-यत्वेनोपदिश्यते योमायोपाधिकः स एवाऽविद्योपा-धिकोभवतीति एवं लिङ्गाङ्गयोस्तादात्म्यभावनात्रय-मुपदिश्य श्रौतवाक्यार्थत्वेनापि तच्चिन्तनीयम् प्रामा-णिकत्वेन ससंरम्भप्रवृत्तिलाभायेत्याह 'तत्पदेनो-च्यतेलिङ्गिमित्यादि,सम्बन्धोऽसिपदेन चेति,सम्बन्ध-स्याकाङ्क्षाभास्यतया प्रकृतेऽभेदलक्षणः संसर्गः

तत्पदसमभिव्याहृतत्वं पदत्वरूपाकाङ्क्षाज्ञाना-
देव भासते असिपदस्य विशिष्टसत्ताबोधकत्वेन
वैशिष्ट्यबोधेप्युपयोगित्वादियमुक्तिः अथवा कटेचै-
त्रोस्तीत्यादौ सप्तम्यन्तप्रथमान्तसमभिव्याहारे
सप्तम्यन्तार्थप्रथमान्तार्थनिष्ठाधेयतारूपसत्ताया अ-
स्तिपदेन बोधनवत् प्रथमान्तद्वयसमभिव्याहारे
उद्देश्ये विधेयस्याभेदरूपसत्ताबोध्यत इति सम्यगु-
क्तमिदं भवति एवं तत्त्वमसि अहं ब्रह्मास्मीति वा-
क्योत्थभावनात्रयं कर्त्तव्यत्वेनोपदिश्य तस्य फलमाह
'लिङ्गाङ्गसम्बन्धीति' 'स उच्यतइति' ननु संज्ञावि-
शेषलाभेपि वस्तुतो न किंचिदभीष्टं सिद्धम्भव-
तीति पर्यनुयोगे आह 'सयोगी स च सर्वज्ञोजीव-
न्मुक्तःस उच्यतइति' योगः तज्जन्यैश्वर्यं सर्वज्ञता
जीवन्मुक्तिश्च सिद्धाभवतीति महाफललाभोऽस्य
सम्पद्यतइतिभावः नैतावन्मात्रमपितुपरमपुरुषार्थ-
मोक्षमप्यसौ प्राप्नोतीत्याह 'लिङ्गाङ्गपदवाच्यार्थंहि-
त्वेत्यादिना लिङ्गाङ्गपदयोस्तत्वं पदयोश्च वाच्यार्थं
मायारूपोपाधिविशिष्टमविद्यारूपोपाधिविशिष्टं च
हित्वा त्यक्त्वा लक्ष्यार्थं जहदजहल्लक्षणयोपनीतं
शुद्धचैतन्यं गृहीत्वा स एवाहमिति चिन्तयन् तादृश-
चिन्तोद्भूतयथार्थबुद्धिबलात् सविलासाऽविद्यानासीत्
नाऽस्ति न भविष्यतीत्यभावत्रयप्रतियोगित्वेन ज्ञाता-
भवतीति निःशेषाविद्योच्छेदेन परममुक्तिमप्ययं प्रा-
प्नोतीतिभावः अनुभवसूत्रमपि प्रमाणयति ।

अनुभवसूत्रे । लिङ्गंतत्पदमा-
ख्यात मङ्गंत्वंपदमीरितम्।संयोगोऽसि-
पदं प्रोक्तमनयोरङ्गलिङ्गयोरिति ॥
एवम् परमाप्तपरमशिवप्रणीतवेदवि-
हितत्वेन लिङ्गधारणस्यवैदिकजनपरि-
ग्राह्यत्वमभिहितमिदानीम् वेदार्थप्र-
तिपादकगौतममन्वादि स्मृतिविहित-
त्वेनापि तस्य तथात्वम् प्रदर्श्यते गौत-
मस्मृतौ,, मुखेमन्त्रोहृदिध्यानंमस्तके-
लिङ्गधारणम्।रुद्राक्षंचशिखाभस्मइति
ब्राह्मणलक्षणमिति ॥ अत्रहृदिध्या-
नम् अन्तर्लिङ्गानुसन्धानम् मस्तकेलि-
ङ्गधारणमितिबाह्यलिङ्गधारणंचाभि-
हतम् ।

'लिङ्गन्ततपदमाख्यातमिति' तत्पदेनाख्यातमिति वक्तव्ये छन्दोनुरोधादियमुक्तिः बोध्यबोधकयोरभेदाभिप्रायेण कथं चिन्नेतव्या । इदं पुनरत्रावधातव्यम् सर्वाप्यत्र प्रक्रियाऽद्वैतसिद्धान्तवत् प्रतीयते तेन स एव सिद्धान्तोऽत्राभिमतोऽस्तीति बहूनां भ्रमः संभवति

परं तथा न भ्रमितव्यम् अद्वैतसिद्धान्ते हि उपाधीनां सर्वेषां मिथ्यात्वमेवास्ति अत्र तूपाधीनां न मिथ्यात्वं किन्तूत्पादविनाशशालित्वेनानित्यत्वमात्रम् एवं जीवब्रह्मणोरद्वैतसिद्धान्ते सर्वथाऽभेद एवास्ति एतन्मते तु परमेश्वरस्य जीवान्तर्यामितया जीवानां च तच्छरीरतया अहं मनुष्योऽहंदेवइति अहं कृशोऽहं स्थूलइत्याद्यभेदवत् जीवब्रह्मणोरप्यारोपिताभेदो व्यवह्रियते तर्हि किमर्थं वाच्यार्थपरित्यागेन लक्ष्यार्थमादायाऽभेदउपपाद्यते किमर्थं च जीवब्रह्मणोःस्वरूपतएवभेदसिद्धौ मायाऽविद्यारूपोपाधिद्वयं तयोर्भेदोपपादनाय परिगृह्यतइति चेत् श्रूयताम्सच्चिदानन्दस्वरूपस्य सर्वशक्तिमतः सर्वज्ञस्य परमेश्वरस्य जडचिदात्मकं सर्वंजगत्तादात्म्येनाभिमानविषयीभूतमिति परमेश्वरः सर्वात्मकउच्यते जीवानान्तुचिद्रूपाणामेव तत्तच्छरीरमात्रं तदात्म्येनाभिमानविषयीभूतमिति जीवास्तत्तच्छरीरात्मकाःपृथग् पृथग्भेदवन्त उच्यन्ते परमेश्वरस्य सर्वाभिमानित्वात् सर्वशक्तिमत्वाच्च सर्वमेव जगत् यथेच्छति तथाकर्तुम्शक्नोति सः यदुक्त भगवता "सर्वतः पाणिपादं तत् सर्वतोक्षिशिरोमुखम् सर्वतःश्रुतिमल्लोके सर्वमावृत्यतिष्ठतीति" ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्टति भ्रामयन् सर्वभूतानियन्त्रारूढानिमाययेति च" जीवानान्तु स्वस्वशरीराभिमानित्वादल्पशक्तिमत्वाच्च स्वेच्छाप्रयत्नाभ्यां साक्षात्स्व स्व शरीरमात्रचेष्टने शक्तिर्भवत्यसतिबाधके'

एवंस्थिते परमेश्वरस्य निरस्तसाम्यातिशयमैश्वर्यं सर्वजगन्नियामकत्वं सर्वशक्तिमत्वं च दर्शयितुं मायोपाधिकत्वमिदं दर्शितम् नत्वद्वैतवेदान्त इववास्तविकाभेदेपि भेदोपपादनार्थम् सर्वं जगदेवात्रमायापदेनोच्यते तस्मिन्तादात्म्याऽभिमाननिमित्तकत्वात्सर्वनियन्तृत्वादिरूपैश्वर्यस्यसमायोपाधिक उच्यतइत्याशयः शक्तिविशेष एव माया इति वा उपाधिभूतं वाच्यांशंपरित्यज्य लक्ष्यार्थदर्शनन्तु लक्ष्यभागस्यैव स्वान्तर्यामितया स्वात्मत्वबुद्धा सोऽहमिति चिन्ताभ्यासस्यौचित्यलाभाय तादृशचिन्ताभ्यासश्च परमात्मशरणकत्वदृढीकरणेन परमेश्वरप्रसादलाभाय ततश्चाज्ञाननिवृत्त्या सकलक्लेशात्यन्तनिवृत्तिलक्षणोमोक्षः सिद्धति परमेश्वरस्याभिमानः तदीयसर्वज्ञताया बाधकोनभवतीति तदीयोपाधिः शुद्धसत्वप्रधानमायोच्यते अस्यैवाभ्यासस्य दार्ढ्याय लिङ्गाङ्गयोगोऽन्तर्बहिर्धारणरूपतया द्विविधेलिङ्गेच ब्रह्मरूपत्वदृष्टिः कर्त्तव्यत्वेनोच्यते "अविद्यासहकारेण नाभून्नास्तीत्युक्तिस्तु अभिमाननिवृत्या तत्प्रयुक्तप्रवृत्तीनां सकलदुखस्य च निवृत्यभिप्राया द्रष्टव्या न तु सर्वथा स्वप्नपदार्थनिवृत्तिवत् प्रपञ्चनिवृत्यभिप्राया जगति तादृशमिथ्यात्वस्यैतन्मतेऽनभ्युपगमादित्यलम् ॥ एवं वेदवाक्यैर्लिङ्गधारणस्य कर्त्तव्यत्वं साधयित्वा स्मृतिरपि तत् कर्त्तव्यत्वं दर्शयतीत्याह 'मुखेमन्त्रइति,।

नन्वत्रब्राह्मणमात्रोद्देशेनमन्त्र-ध्यानलिङ्गधारणादिषड्विधधर्मवत्वम् विधीयते तच्चाचारविरुद्धम् केषु चि-ल्लिङ्गधारणभस्मधारणोभयाभावात् केषुचिल्लिङ्गधारणाभावादितिचेन्न ।

तच्चाचारविरुद्धमिति श्रौतस्मार्तब्राह्मणेषु बहुषु यावज्जीवमग्निहोत्रानुष्ठानकर्मशालिषु लिङ्गधारणा-देरदर्शनादिति भावः तदेव दर्शयति केषुचिदित्या-दिना, समाधत्तेमृताहं स्समतिक्रम्येत्यादिना, ।

'मृताहंसमतिक्रम्य चांडालाःकोटिजन्मसु'इतिब्राह्मणमात्रोद्देशेनमृति-दिनश्राद्धातिक्रमे दोषविधायकवाक्य-स्यैकादश्यादिव्रतप्रधानकानन्दतीर्थी-यमतानुयायिनः व्यतिरिक्तविषयत्व-वत्" ।

मृताहं क्षयदिने एकोदिष्टश्राद्धं मतभेदेन त्रि-दैवतपार्वणम्वा 'समतिक्रम्य, अकृत्वा अत्रक्षयः पितुर्मातुश्चग्राह्यः तयोरेव सांवत्सरिकस्य नित्य-त्वात् 'आनन्दतीर्थीयेति, तैरेकादश्यां श्राद्धप्राप्तौ

व्रतभङ्गभिया श्राद्धं न क्रियते तदातन्निषेधकवाक्यानां वैष्णवग्रन्थेषूपलभ्यमानानामनुरोधेन श्राद्धातिक्रमदोषबोधक वाक्ये एकादशीमृतस्य पितुः पुत्रेभ्यो वैष्णवविशेषेभ्योऽतिरिक्तविषयकत्वेनायं सङ्कोचोमन्तव्यः ।

"रात्रिंशिवाकाचनसन्निधत्ते । विलोचनेजागृतमप्रमत्ते। समानधर्मायुवयोस्सकाशे। सखाभविष्यत्यचिरेणकश्चिदिति, । सकलजनलोचनोद्देशेनजागरणविधायकवाक्यस्य रामानुजमतानुयायिव्यतिरिक्तविषयत्ववत्त्वास्यापि लिङ्गधारिविप्रविषयत्वात् । किञ्चमस्तके लिङ्गधारणमिति विशेषपर्य्यवसायिपदसत्वेनसामान्यपरस्यापि ब्राह्मणपदस्यलिङ्गाङ्गिब्राम्हणरूपविशेषपर्य्यवसानाच्च । नन्वेमपिलिङ्गाङ्गिब्राह्मणोद्देशेनमन्त्रध्यानादिषड्विधधर्मसमुदायस्यलक्षणाकरणे तथा विध-

क्षत्रियादावतिप्रसक्तमितिचेन्न इति ब्राह्मणलक्षणमिति वाक्यानुरोधेन ब्राह्मणत्वे सति षड्विधधर्मवत्वम् लिङ्गाङ्गिब्राह्मणानाम् लक्षणमित्यत्र तात्पर्यावसा-यादिति ॥

'रात्रिः शिवेति, कश्चिच्छैवः शिवरात्रौ जागरणाय स्वकीयनेत्रे प्रोत्साहयति हेविलोचने नेत्रे काचनाऽनिर्वचनीया महाफलदा शिवा कल्याणमयी रात्रिः शिवरात्रिरिति यावत् सन्निधत्ते सन्निहिताऽस्ति अस्यां रात्रौ युवामप्रमत्ते सावधाने सती जागृतं प्रमादान्निद्रावती माभूतमित्यर्थः किमेतस्य फलमित्यत्राह 'समानेति, युवयोःसकाशं समीपं युवयोः समान धर्मा सखा मित्रं अर्थात् तृतीयं नेत्रमचिरेण कालेन भविष्यति अस्यां रात्रौ जागरणात्त्रिनेत्रःसाक्षाच्छिवएवमनुष्यो भवतीतितात्पर्यम् तेन च शिवरात्रौ जागरणं शिवत्वप्राप्तये कर्त्तव्यमिति विधानं लभ्यते एनमपिविधिं कतिपयवैष्णवसम्प्रदायानुयायिनो न मन्यन्ते वाक्यविशेषादाग्रहाद्वा एवमेव लिङ्गधारणविधिरपि लिङ्गधारिब्राह्मणविषयकोमन्तव्यः वस्तुतस्त्वविहितकर्मणामसङ्कोचे-

पिश्चाद्बुद्दिवैधुर्यादिना कैश्चिचदननुष्टानेपिविधीनांका-
चित्क्षतिर्नभवतीहसङ्कोचोक्तिस्तु अभ्युपगम वादेन।

श्रीरस्तु । तत्रैव । "अक्षपादा-
दयस्सर्वेशक्तयः परयामुदा । धारय
न्त्यलिकाग्रेषु शिवलिङ्गमहर्निशमिति,।
मनुस्मृतौ"सर्वकर्मविमुक्तस्यध्यानयोग-
रतस्यच। नतस्यदहनम्कार्यम् न च
पिण्डोदकक्रियेति, । अत्रससमुच्चयद्योत-
तकचकारसत्वेन ध्यानयोगरतसर्वक-
र्मविमुक्तयोःप्राधान्येनोद्देश्यत्वात् कोऽ
सौध्यानयोगरतइत्याकांक्षायाम्॥'शि-
वध्यानरतोभूत्वाशिवलिङ्गाङ्ग संयुतः॥
शिवेतरपरित्यागीध्यानयोगीसउच्यते।
यथाबाह्येशिवम् ध्यात्वापूजांकुर्वन्ति-
मानवाः । तथाहृदिप्रसन्नश्चेद्ध्यानयो-
गीसऊच्यते ॥ इतितत्रैवोक्तत्वेन सर्व-
कर्मविमुक्तपदोपस्थाप्ययतीश्वरम्

ध्यानयोगिपदोपस्थाप्यलिङ्गधारिणं
चोद्दिश्यदहनाभावादिविधानेनलिङ्ग-
धारणसिध्धिः॥ बोधायनस्मृतौ" । स-
र्वसङ्गनिवृत्तस्य ध्यानयोगरतस्यच । न
तस्यदहनंकुर्यान्नाशौचम् नोदकक्रिये-
ति अत्रापिध्यानयोगरतइत्यनेनोक्त-
दिशालिङ्गधारणसिध्धिः । शातातप-
स्मृतौ । "वानप्रस्थम् योगिनंचलिङ्गि-
कम् भिक्षुकं यतिम् । तुर्याश्रमाणा-
म् मध्येचरसायाम् निक्षिपेन्मृतमि-
ति।"अत्रलिङ्गधारिणमुद्दिश्यखननवि-
धानादुद्देश्यविशेषणत्वेन लिङ्गधारण-
सिद्धिरिति । नन्वनेनोदाहृतश्रुतिस्मृ
तिकदम्बेनलिङ्गधारणतत्पूजादेर्नित्य-
त्वेनस्त्रीबालसाधारण्येन यावज्जीव
भावित्वमभिहितम् । तदनुपपन्नम्
दर्शनस्पर्शनसम्भाषणाद्ययोग्यानाम्

रजस्वलानाम् सूतिकास्त्रीणांचधारण-
पूजादेरत्यन्तविरुद्धत्वात् यदि तत्र
धारणपूजादिकम् क्रियते तदाऽशुचि-
शरीरसम्बन्धाल्लिङ्गस्याप्यशुचित्वप्राप्तौ
पुनःस्नानानन्तरमपिपूजाद्यकरणता-
पत्तेः । नहितदालिङ्गस्य पुनस्संस्कारः
क्रियते भवत्सिद्धान्तविरोधादिति ।
किंच । शैवान् पाशुपतांश्चैवलिङ्गिनं
व्रतिनन्तथा । बिडालव्रतिनश्चैव पाष-
ण्डान् परिवर्जयेत् ॥ पाषण्डं पति-
तं व्रात्यं चक्रिणं लिङ्गधारिणम् ।
तथा देवलकं दृष्ट्वासवासाजलमा-
विशेत् ॥ चक्रिणं लिङ्गिनं दृष्ट्वा
सचैलं स्नानमाचरेत् । यस्तु सन्तप्तच-
क्रादिलिङ्गाङ्कितततनुर्द्विजः । नाधिका-
री स विज्ञेयः श्रौतस्मार्तादिकर्मसु ॥

मुनेरन्नं न भोक्तव्यम् । योगिनां लिङ्गिनां तथेति" शास्त्रनिषिद्धत्वाच्च लिङ्गधारणमकर्तव्यमेवेति पूर्वोदाहृतश्रुतिस्मृत्यादिकमन्तरानुसन्धानपरत्वेन यथाकथंचिद्योज्यमिति चेत् ।

ध्यानयोगरतस्य दहनादिकनिषेधतास्मृतिवाक्यनापि लिङ्गधारणं सिद्धं भवतीत्याह सर्वकर्मविमुक्तस्येत्यादि कोऽसौध्यानयोगरत इत्याकाङ्क्षायां स्मृतिस्थमेवध्यानयोगरतलक्षणं दर्शयति । "शिवध्यानरतोभूत्वाशिवलिङ्गाङ्गसंयुतः शिवेतरपरित्यागीध्यानयोगी स उच्यतइति" अनेनैव प्रकारेण सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य चेति बोधायनस्मृतेः"वानप्रस्थं योगिनं च लिङ्गैक्यं भिक्षुकं यतिमिति शातातपस्मृतेश्च तत्साधकत्वं बोध्यम् लिङ्गैक्यम् तीव्रध्यानाभियोगेनलिङ्गमयताप्राप्तिम् स्त्रीबालादिसाधारण्येन लिङ्गधारणस्य नित्यत्वे रजस्वलानामत्यन्ताशुचित्वप्राप्तानां कथं कर्त्तव्यमित्याशङ्कां शैवान् पाशुपतांश्चैव लिङ्गिनं व्रतिनं तथेत्यादिलिङ्गधारणनिषेधश्च कथं समाधेय इत्याशङ्कां च क्रमेणसमाधत्ते मैवमित्यादिना।

मैवम् । 'नकर्मणा नप्रजया धनेन त्यागेनैके अमृतत्वमानशुः । नान्यत्रकर्मसन्त्यागान्मोक्षं विन्दन्ति मानवाः । इत्यादिनात्यन्ताभ्यर्हितमुख्यपुरुषार्थमुक्तिजनकत्वप्रतिपादनेपि नहिंस्यात् सर्वभूतानिनमांसं समश्नीयात् । नोच्छिष्टं कस्यचिद्दद्यान्नाद्याच्चैतत्तथान्तरा । न चैवात्यशनं कुर्यान्नचोच्छिष्टः क्वचिद्व्रजेदित्यादिश्रुतिमनुस्मृतिभ्याम् निषिद्धत्वेपि पशुविशसनमांसभक्षणसोमपानादेः प्रत्यक्षविरुद्धत्वेपि च ॥ "सोमेनयजेतसोमेनोच्छिष्टम् यदग्नीषोमीयम् पशुमालभेतेत्यादिविशेषवाक्यविहिततत्तद्धर्मकर्तव्यत्ववत् सर्वलिङ्गं स्थापयतीत्यादिद्दृत्यविधिना लिङ्गधारणतत्पूजादेर्यावज्जीवकर्तव्य-

त्वविधाने "गृहे यस्मिन् प्रसूता स्त्री सूतकं नात्रविद्यते । लिङ्गार्चनरतायाश्चक्रतौ नार्या न सूतकम् ॥ तथा प्रसूतिकायाश्चसूतकं नैवविद्यते । लिङ्गार्चनरतानारी सूतकीतुरजस्वला रविरग्निर्यथावायुः कोटिकोटिगुणाश्शुचिः ॥ तद्धारणात् प्रमुञ्चन्ति युवतिं सूतकादयः" ॥ इतिसिद्धान्तशिखामणिवीरागमवचनेन "यथाह्यग्निसमावेशान्नायोभवति केवलम् । तथैव ममसान्निध्यान्नते प्रकृतिमानुषाः॥ तैलयुक्तं तु कार्पासं ज्योतिस्पर्शात्तथैव तत् । स्नेहयुक्तस्य सद्भक्तेर्लिङ्गस्पर्शान्नलिङ्गतेति।पद्मपुराणशिवरहस्य वचनानुरोधेन शैवं लिङ्गार्चनं यस्य यस्य चाग्निपरिग्रहः । वानप्रस्थ-

यतीनां च शरीरेनास्ति सूतकमिति पराशरस्मृत्यनुसारेण च रजस्वलादिस्त्रीणाम् धारणापूजादिकरणेविरोधाभावात् किंच पौण्डरीकादिदीर्घसत्रदीक्षितयज्वपत्न्यास्तथाविधदीक्षाविषये रजस्वलाद्यशौचानामपवादकत्वाभाववद्यज्वनोऽपितादृशदीक्षाविषये जाताऽशौचादीनामपवादकत्वाभाववच्च॥ द्रव्याभावेन प्रतिबन्धकान्तरवशेन वा द्वादशवत्सरपर्यन्तमविवाहितकन्याविवाहप्रसक्तौ माङ्गल्यतन्तुधारणाद्यनन्तरम् होमकाले प्राप्ते कन्यकायास्तदानीम् ऋतुमतीत्वे दृष्टेवाश्रुतेवा याज्ञिकाः किं कुर्वन्तीति तात्पर्येण "विवाहे वितते तन्त्रे होमकाल उपस्थिते। कन्यामृतुमतीम्

दृष्ट्वाकथं कुर्वन्ति याज्ञिकाइति प्रश्ने॥ "हविष्मतीरिमा आपोहविष्मान्देवो अध्वर"इति मन्त्रेण कन्यकाम् स्नापयित्वा नववस्त्राभ्यामलंकृत्य युञ्जानः प्रथमम् मनइति द्वे आहुतीजुहुयादति भट्टीयेविवाहखण्डे प्रतिपादितत्वेन तत्र रजस्वलाशौचस्य विवाहदीक्षापवादकत्वाभाववच्च ॥ पैतृकश्राद्धादौ पितृत्वेनावाहितब्राह्मणानाम् दक्षिणाप्रदानानन्तरजाताऽशौचादिश्रवणे तादृशदीक्षाविषयेजाताऽशौचादेः अपवादकत्वाभाववच्च ॥

"न कर्मणा न प्रजया" माहिंस्यात्सर्वाभूतानि, न मांसमश्नीयादिवाक्यैर्हिंसाया निषेधस्याग्नीषोमीयपश्वालम्भवाक्येन सङ्कोचवत् रजस्वलाऽशुचित्वबोधकवाक्यस्यापि लिङ्गार्चनरतायाश्च ऋतौ नार्या नसूतकमित्यादिवाक्यैः संकोचान्न काप्यनुपपत्तिः । अन्येपि बहवोऽशौचसङ्कोचा धर्मशास्त्रे

सन्तीति दृष्टान्तार्थमेव दर्शयति पौण्डरीकदीर्घसत्र-दीक्षितकन्यामृतुमतींपैत्रकश्राद्धादाविति च अत्रषड-शीतिवाक्येषु सूतकात्प्राक् समारब्धमिदमेव वाक्यम् प्रकृतोपयोगिलिङ्गधारणव्रतस्य यावज्जीवकर्त्तव्यतया सङ्कल्पितत्वेन प्रारब्धत्वात् सङ्कल्पोव्रतसत्रयोरित्य-नेन तादृशसङ्कल्पस्य प्रारम्भरूपतया बोधितत्वात् ॥

नायोभवतीति यथा अग्नौ प्रवेशाल्लोहपिण्डं केवलं साधारणमयोनभवति अर्थात् तत्कालेऽग्निमयं भव-तीत्यर्थः एवं सदाशिवस्यसान्निध्यात् ते लिङ्गधारिणः प्राकृतमनुष्या नभवन्तीत्यर्थः ।

"तनुत्रयगतानादिमलत्रयमसौ गुरुः । दीक्षात्रयेणनिर्दग्ध्वालिङ्गत्रय-मुपादिशत् ॥

"तनुत्रयगतानामिति" कारणशरीर लिङ्गश-रीर स्थूलशरीरगतं मलत्रयमाधारत्रित्वात् त्रिवि-धम् कायिक वाचिक मानसिकरूप पापत्रयम् 'निर्द-ग्ध्वेति'ल्यबभाव आर्षः ।

यावज्जीवमिदं लिङ्गं शरीरा-न्नवियोजयेति ॥ गुरुकृतलिङ्गधार-णादीक्षायाः नित्यम् स्ववामहस्ताग्रे

दृष्ट्वाकथं कुर्वन्ति याज्ञिकाइति प्रश्ने॥ "हविष्मतीरिमा आपोहविष्मान्देवो अध्वर"इति मन्त्रेण कन्यकाम् स्नापयित्वा नववस्त्राभ्यामलंकृत्य युञ्जानः प्रथमम् मनइति द्वे आहुतीजुहुयादति भट्टीयेविवाहखण्डे प्रतिपादितत्वेन तत्र रजस्वलाशौचस्य विवाहदीक्षापवादकत्वाभाववच्च ॥ पैतृकश्राद्धादौ पितृत्वेनावाहितब्राह्मणानाम् दक्षिणाप्रदानानन्तरजाताऽशौचादिश्रवणे तादृशदीक्षाविषयेजाताऽशौचादेः अपवादकत्वाभाववच्च ॥

"न कर्मणा न प्रजया" माहिंस्यात्सर्वाभूतानि, न मांसमश्नीयादिवाक्यैर्हिंसाया निषेधस्याग्नीषोमीयपश्वालम्भवाक्येन सङ्कोचवत् रजस्वलाऽशुचित्वबोधकवाक्यस्यापि लिङ्गार्चनरतायाश्च ऋतौ नार्या नसूतकमित्यादिवाक्यैः संकोचान्न काप्यनुपपत्तिः । अन्येपि बहवोऽशौचसङ्कोचा धर्मशास्त्रे

सन्तीति दृष्टान्तार्थमेव दर्शयति पौण्डरीकदीर्घसत्र-दीक्षितकन्यामृतुमतींपैत्रकश्राद्धादाविति च अत्रषड-शीतिवाक्येषु सूतकात्प्राक् समारब्धमिदमेव वाक्यम् प्रकृतोपयोगिलिङ्गधारणव्रतस्य यावज्जीवकर्त्तव्यतया सङ्कल्पितत्वेन प्रारब्धत्वात् सङ्कल्पोव्रतसत्रयोरित्य-नेन तादृशसङ्कल्पस्य प्रारम्भरूपतया बोधितत्वात् ॥

नायोभवतीति यथा अग्नौ प्रवेशाल्लोहपिण्डं केवलं साधारणमयोनभवति अर्थात् तत्कालेऽग्निमयं भव-तीत्यर्थः एवं सदाशिवस्यसान्निध्यात् ते लिङ्गधारिणः प्राकृतमनुष्या नभवन्तीत्यर्थः ।

"तनुत्रयगतानादिमलत्रयमसौ गुरुः । दीक्षात्रयेणनिर्दग्ध्वालिङ्गत्रय-मुपादिशात् ॥

"तनुत्रयगतानामिति" कारणशरीर लिङ्गश-रीर स्थूलशरीरगतं मलत्रयमाधारत्रित्वात् त्रिवि-धम् कायिक वाचिक मानसिकरूप पापत्रयम् 'निर्द-ग्ध्वेति'ल्यबभाव आर्षः ।

यावज्जीवमिदं लिङ्गं शरीरा-न्नवियोजयेति ॥ गुरुकृतलिङ्गधार-णदीक्षायाः नित्यम् स्ववामहस्ताग्रे

सावधानेन पूजयेदिति तत्पूजादीक्षायाश्चयावज्जीवभावित्वेन तादृशदीक्षाविषये रजस्वलाद्याशौचानाम् अपवादकत्वाभावस्याभ्युपेतव्यत्वात् । अतएवाशौचनिर्णयार्थम् प्रवृत्तषडशीतिस्मृतौ कौशिकादित्येन ।

"प्रेतकार्यनिवृत्तानाम् पतितानांचपैतृके। भूमिरक्षणकृत्येषु राजस्तत्प्रेषितस्य च॥

प्रेतकार्यनिवृत्तानामित्यादिस्पष्टम् ॥

जन्मप्रभृतिपापानां विनाशेविचरिष्यतः । प्रेतकार्याधिकारार्थं कर्मण्यपिचपैतृके ॥ उत्क्रान्तिवैतरण्योश्च दानेप्रेतोदकस्यच। एवम् विधानामन्येषां नाशौचं नच सूतकम् ॥ कर्तव्यान्येवकर्माणि यथापुण्यस्तथैवसः । सूतकात्प्राक् समारब्ध-

मनेकाहन्तुयद्व्रतम् ॥ कायिकं तत्प्रकुर्वीत न तु दानार्चनं जपम् ॥ वानप्रस्थयतिब्रह्मचारिणामशुचयोव्रताः । इतरेषांसमारम्भकर्माणामशुचयस्सदा ॥ इत्यादिना समारम्भव्रतकर्मणाम् मध्ये जाताऽशौचादिप्रसक्तावपितत्तत्कर्माणि कर्तव्यान्येवेत्युक्त्वा कस्यकर्मणः कोवाप्रारम्भइत्यपेक्षायम् "प्रारंभोवरणं यज्ञे सङ्कल्पो व्रतसत्रयोः। नान्दीमुखं विवाहादौ श्राद्धे पाकपरिग्रह इत्युक्तम् । तस्य चायमर्थः । यज्ञे गृहयज्ञादौ ऋत्विग्वरणम् प्रारम्भः व्रते चान्द्रायणतीर्थयात्रालिङ्गधारणपूजादौ सत्रे पौण्डरीकादिदीर्घसत्रे संकल्पः प्रारम्भः नान्दीमुखम् विवाहादिकर्मणि श्राद्धे पाकक्रियाप्रारम्भः । तत्तत्कर्मणामेतादृशप्रारम्भानन्तरमशौचेपि कर्तव्य-

त्वमेवेति । एवं च "लिङ्गधारणकं नाम व्रतं माहेश्वराभिधम्। यावज्जीवमिदं दत्तमिष्टलिङ्गं समर्चयेदि"त्यादिस्कन्दपुराणोक्तरीत्या लिङ्गधारणतत्पूजाव्रतस्यापि गुरुकृतदीक्षासमये यावज्जीवभावित्वेन संकल्पकरणादान्तरालिकाशौचादिप्रसक्तावपि कर्तव्यत्वमेवेत्यङ्गीकरणीयम् । रजस्वलानाम् धारणादांशेपरिशुद्धत्वे कर्मान्तरेपि परिशुद्धिस्स्यादितितुल्यम् । केचित्तुदन्तधावनगण्डूषजलादिना पवित्रीकृतमुखस्य मन्त्रोच्चारणादौ शुद्धत्वेप्यन्यशरीरनिष्ठीवनादावपरिशुद्धत्ववद्धारणपूजादिविषये परिशुद्धत्वेपि कार्यान्तरेतदभावइतिप्राहुः ।

यदुक्तम् 'अशुचिशरीरसम्बन्धाल्लिङ्गस्याप्यशुचित्वमिति' तदत्यन्ता-

रमणीयम् यद्यप्यत्रपूर्वोदाहृतपरा-
शरस्मृतिसिद्धान्तशिखामण्यादिव-
चनरीत्या धारणादंशो शरीरस्याशु-
चित्वाभावेन तत्संपर्काल्लिङ्गस्य तथा-
त्वं दूरापास्तमेव तथाप्यभ्युपेत्यवा-
देन निराक्रियते तत्राशुचिशरीरसं-
पर्काल्लिङ्गाधिष्ठितचित्कलास्वरूपपर-
शिवस्याशुद्धिरापद्यते उत तच्छरीरभू-
तलिङ्गस्य नाद्यः। निष्कलम् निष्क्रि-
यम् शान्तम् निरवद्यम् निरञ्जन-
मिति' तस्मात् सर्वगतश्शिव इतिच
श्रुत्यवगमितनिरस्तसमस्तदोषलव-
कलङ्कस्यशुच्य,शुचिवस्तुसाधारण्येन
सर्वान्तर्यामिणः परमेश्वरस्याशु-
चिशरीरसम्पर्केण दोषापादनासम्भ-
वात्। नद्वितीयः। अविभाज्यस-
म्बन्धेन निर्दुष्टपरमेश्वराधिष्ठानभूत-

लिङ्गस्यापि तदापादनासम्भवात् । यदि मन्यसे क्रियादीक्षासमये पञ्चामृतपञ्चगव्यस्नानतत्तदधिवासषडध्वशोधनकलाह्वानादिना लिङ्गे गुरुकृतसंस्कारस्याशुचिशरीरसम्बन्धान्नाश इति तर्हि तदपि कूर्मरमणीदुग्धपानमेवानुकरोति । तथाहि क्रियेच्छादिस्वरूपस्याशुतरविनाशिनो यागस्य कालान्तरभाविस्वर्गजनकत्वान्यथानुपपत्त्या यज्वतत्पत्न्योर्यागजनितफलोदयपर्यन्तस्थायिनोऽपूर्वरूपसंस्कारस्यान्तरालिकजाताशौचरजस्वलाशौचादिनाश्यत्वाभाववत् प्रकृतेप्यध्वशोधनाधिवासादेराशुविनाशिनः "संस्कृत्य गुरुणा दत्तमिष्टलिङ्गमतन्द्रितः । नित्यं स्ववामहस्ताग्रे सावधानेन पूजयेदिति" वचनसिद्धलिङ्गसंयुक्ताङ्गविदेहमुक्तिपर्य-

न्तम् नित्यसङ्कल्पितपूजानिवेदनादि प्रयोजकत्वासम्भवेन तेनापि लिङ्गे श क्तिरूपस्थायिसंस्कारजननेन तस्याप्या-न्तरालिकाशौचादिसद्देहसम्पर्कादि-ना नाशासम्भवात्। यद्यतोपिनाशः क-ल्प्यते। तदायज्वतत्पत्नीवृत्तिसंस्कार-स्य गङ्गास्नानान्नदानादिजनिततत्त-त्संस्काराणां चान्तरालिकाशौचादि-नानाशेन सकलकर्मणाम् फलाभाव-प्रसक्तौ तद्बोधकवेदशास्त्राद्यप्रामाण्य-प्रसक्तौ बौद्धमतप्रवेशापत्तेः। यदिच "शैवं देवार्चनं यस्य यस्यचाग्निप-रिग्रह इतिपूर्वोदाहृतपराशरस्मृतिप-र्यालोचनयायज्वशरीरस्याऽशौचा-भावान्नापूर्वरूपसंस्कारनाशइत्युच्यते। तदातेनैवलिङ्गाङ्गिशरीरेप्यशौचाभा-वप्रतिपादनेन तत्संयुक्तलिङ्गेऽपिसं-

स्कारानिवृत्तेः। किञ्च। श्रीभुवनेश्वरपुरुषोत्तमादिस्थले निवेदनमात्रेण परिशुद्धप्रसादस्य "चाण्डालवाटिकायांवामत्प्रसादं सुपावनमिति वचनानुरोधेन जात्यन्तरस्पर्शेऽपि वैदिकपरिग्राह्यत्वाङ्गिकारेण साक्षान्निरस्तदोषकलङ्कनित्यशुद्धपरमशिवाधिष्ठानभूतलिङ्गस्याशुचिशरीरसम्बन्धेप्यशुचित्वाभावे विवादाभावाच्च।

यदुक्तम् 'अशुचिशरीरसंबंधादित्यादि' अयमेतत्समाधानग्रन्थस्याशयः प्रथमन्त्वेतन्मते परवैराग्यप्राप्तसन्न्यस्तशरीरवत् वास्तविकशिवमयत्वप्राप्तशरीरस्याशुचित्वमेवनास्ति मतान्तरालम्बनेन तच्छरीरस्याशुचित्वाभ्युपगमेपि तत्संबधाल्लिङ्गस्य तदधिष्ठातृशिवतत्त्वस्यचाशुचित्त्वं न सम्भवति परमात्मनस्तावदशुद्धित्वोक्तिः पातकायैव भविष्यति। तदधिष्ठितलिङ्गस्याशुचित्वं वक्तुमशक्यम् परमात्माभेदाध्यवसायात्षडध्वशोधनादिजन्यसंस्कारोऽशुचित्वेन नश्यति तेनापूज्यत्वमायातीत्यपिवक्तुमशक्यम् यागजन्यापू-

र्वस्य यजमानदंपत्योरात्मगतस्य। शौचेन नाशादर्शना-
दशौचस्य 'संस्कारनाशंप्रत्यहेतुत्वादिति'

नचस्थावरेपि जाताऽशौचादि।
मज्जनस्पर्शौ प्रतिष्ठाकालीनाचार्यकृत-
संस्कारस्यापि नाशो नस्यादितिवाच्य-
म्। वैषम्यात्। प्राणलिङ्गस्थले यल्लिङ्गम्
यत्रधार्यम् तस्यतदीययावज्जीवकर्त-
व्यपूजानिवेदनादिबोधकशास्त्रबलेन
शुच्यशुचिसाधारणकालकर्तव्यपूजा-
दिप्रयोजकसंस्कारस्य स्थायित्वकल्प-
नेपि स्थावरेतदभावात् । अत एव
तत्रपुनस्संप्रोक्षणादिकमपि दृश्यतइ-
त्यलम् विस्तरेण ॥

'वैषम्यादिति' स्थावरलिङ्गप्राणलिङ्गयोरि-
त्यर्थः स्थावरलिङ्गे प्रति दिनं पूज्यताप्रयोजक सं-
स्कारेण प्रयुक्तपूजायांकर्तृनियमाभावादेकस्याशुचि-
त्वे पुरुषान्तरेण तत्पूजायाः निर्वाहात् तत्रपरमेश्व-
रेणाऽशुचिस्पर्शनं सह्यतेप्राणलिङ्गेतु एकपुरुषस्यैव
यावज्जीवं पूजनीयताप्रयोजकसंस्कारस्य दीक्षाकाले

गुरुणा विहितत्वादशौचावस्थायां तत्पुरुषस्पर्शे न तन्नाशः। यावज्जीव पूजाया बाधापत्त्या व्रतभंगभिया च तादृशसंस्कारस्य तेनैतन्मतेऽनाश्यत्वकल्पनादिति

यच्चोक्तम् "शैवान् पाशुपतांश्चै-वेत्यादिशास्त्रनिषिद्धत्वेन लिङ्गधारण मकर्तव्यमिति तदप्यनाकलितरमणी यम्। तादृशशास्त्रपर्यालोचनया सर्वे षामप्यदर्शनीयत्व प्रतीत्या नास्माकम-निष्टमिति। तत्रशिवसम्बन्धिनश्शैवा-इतिव्युत्पत्त्या शैवपदेन भूतिरुद्राक्षधा-रिणाम् पूर्वशैवानाम् स्मार्तानाम् प्रदोषकालशिववन्दनभस्मधारणवता-मानन्दतीर्थीयानांच ग्रहणं भवति। न-चावयवशक्त्यामतान्तरगतत्वेपि तस्य योगरूढ्या लिङ्गधारकब्राह्मणबोधइ-तिवाच्यम्। विशिष्यतद्बोधकलिङ्गिप-दसत्वात्। नचशैवपदस्यलिङ्गिपदवि-

शेषणत्वमिति वाच्यम् । पाशुपतांश्चैवे-
त्युक्तसमुच्चयद्योतक च कारविरोधात्
किञ्च । पाषण्डपदमपि स्मार्तपरमेव-
पाषण्डास्सर्वलिङ्गिनइति कोशेन त्रिपु-
ण्ड्रोर्ध्वपुण्ड्रादिचिन्हानाम् तेषामेव-
सत्त्वात् । भागवतप्रविष्टानाम् तेषाम्
सत्यभामारुक्मिणीकृष्णावेषादिनाना-
विधलिङ्गसत्त्वात् । लीनमर्थम् गमय-
तीति व्युत्पत्त्या तत्तद्देवताभिव्यक्ति-
स्थानशिलाताम्रादिप्रतिमानाम् लिङ्ग
पदवाच्यत्वेन " आदित्यमंबिकांविष्णुं
गणनाथं महेश्वरमिति " वचनावग
ततादृशपञ्चलिङ्गपूजायास्तेषां प्रसिद्ध-
त्वाच्चेति । नचपाषण्डलिङ्गपदयोर्वि-
शेषणविशेष्यभावइति वाच्यम् । लिङ्ग-
धारिब्राह्मणानामुक्तपाषण्डपदवा-
च्यसर्वलिङ्गित्वाभावात् पाषण्डं पतितं

व्रात्यमित्यत्रापिपाषण्डपदमुक्तदिशा-
स्मार्तपरमेव ।

'नास्माकमनिष्टमिति' "यश्चोभयोस्समोदोषः परिहारस्तयोस्समः नैकःपर्यनुयोक्तव्यस्तादृगर्थविचारणे" इति न्यायादिति भावः शिवदेवताकत्वरूपशैवत्वस्यात्यन्तहठवद्वैष्णवातिरिक्तेषुप्रायःसर्वेष्वेववास्तविकब्राह्मणेषुसद्भावात् सर्वेषामेवास्पृश्यत्वापत्तेः रूढिशक्तिमाश्रित्य लिङ्गधारिमात्रविषयपरत्वं वक्तुमशक्यम् लिङ्गिपदस्य पृथक् तस्मिन् श्लोके सत्त्वेन पौनरुक्त्यापत्तेः । शैवपदस्येतरविशेषणत्वन्नसम्भवति "शैवान्पाशुपतांश्चेति" चकारेण समुच्चयस्य प्रतीयमानत्वात् 'पाषण्डाःसर्वलिङ्गिन'इति कोशे सर्वलिङ्गिपदे सर्वेचते लिङ्गिनश्चेति इनन्तेन कर्मधारयवत् 'न कर्मधारयान्मत्वर्थीय' इत्यस्यप्रायिकत्वेन सर्वाणि लिंगानि सन्तियेष्विति कर्मधारयोत्तरमत्त्वर्थीयान्तत्वस्यापि संभवाल्लिङ्गपदस्यच लीनमर्थंगमयतीति पूर्वदर्शितव्युत्पत्या तत्तद्देवताभिव्यञ्जकप्रतिमामात्रपरत्वेन सर्वप्रतिमाऽऽराधकत्वस्यैकस्मिन् पुरुषे बाधितत्वेनानेकत्व एव पर्यवसानस्य वक्तव्यतयाऽनेकप्रतिमासु देवाराधकानां सर्वेषामेव पाषण्डत्वं प्राप्नोतीति एतद्ग्रन्थस्याशयः

मुनेरन्नं नभोक्तव्यमित्यपिना-
स्मदनिष्टापादकम् । "यजमानकृतं
पापमन्नमाश्रित्यतिष्ठति । अन्नं न
प्रतिगृह्णीयात् प्राणैः कण्ठगतैरपीति"
सर्वत्राप्यन्नप्रतिग्रहनिषेधात् किंच ।
"नाश्रोत्रियहुते यज्ञे ग्रामयाजहुते-
तथा । स्त्रियाक्लीबेनचहुतेभुंजीतब्रा-
ह्मणः क्वचित्" उग्रान्नं सूतकान्नञ्चपर्या-
चान्तमनिर्दशम्। अनर्चितं वृथामां-
समवीरायाश्चयोषितः। द्विषदन्नं न-
गृह्यान्नमवधूतमपक्षुतम्। पिशुनाऽनृ-
तयोश्चान्नं कृतविक्रयिणस्तथा। गणा-
न्नं गणिकान्नं चविदुषांचविगर्हितम्।
विष्ठावार्धुषिकस्यान्नंशास्त्रविक्रयिणः-
मलमित्यादितत्तदन्ननिषेधकमनुस्मृ-
तौ लिङ्गधार्यन्नस्यानिषेधाच्चेति॥ वस्तु
तस्तु श्रुतिस्मृत्योर्विरोधे विरोधाधि-

करणान्यायेन श्रुतेः प्रबलत्वात्प्रागुदा हृतसर्वलिङ्गश्रुतिस्थापयतीत्यादिप्रबलानेकश्रुतिविहितलिङ्गधारणस्य स्मृत्यानिषेधायोगेन वेदतुल्यमहाभारते आनुशासनिकपर्वणि । "किमाहुर्भरतश्रेष्ठ विप्राः पात्रं सनातनं । लिङ्गिनं ब्राह्मणं चैव ब्राह्मणं चाप्यलिङ्गिनम्" इतियुधिष्ठिरेणपृष्टे "सद्वृत्तिमपि विज्ञाय लिङ्गिनेचेतरायच । देयमाहुर्महाराज उभावेतौतपस्विनौ ॥ इतिभीष्मवचनेन लिङ्गधारिद्विजानाम् दानपात्रताविधानात् । तेषामदर्शनीयत्वायोगेनचनानेनलिङ्गधारिणांनिन्द्यत्वम् ।

"मुनेरन्नं न भोक्तव्यमिति" निषेधस्तु न कस्यापि निन्द्यत्वमापादयति अन्नं न प्रति गृह्णीयात् प्राणैः कण्ठगतैरपी"त्यनेनसर्वेषामेवान्नस्य निषेधात् मनुस्मृतौ

"उग्रान्नं चे"त्यादिना निषिद्धान्नानां गणानप्रकरणे लिङ्गधारिणां निषिद्धान्नत्वेनागणनात् एवं विधनिषेधा द्वेष प्रयुक्ता इवा भान्ति "सद्वृत्तिमपि विज्ञाय लिङ्गिनेचेतराय च। देयमाहुर्महाराज उभावेतौ तपस्विनौ" इति महाभारतवाक्येन तपस्स्वाध्यायसद्वृत्तिविशिष्ट ब्राह्मणे लिङ्गिन्यलिङ्गिनि च पात्रत्वमवगम्यते

परन्तु। "योवैस्वां देवतामतियजते प्रस्वायैदेवतायैच्यवते नपरां प्राप्नोति पापीयान् भवतीतिश्रुत्या"श्रेयां त्स्वधर्मोविगुणःपरधर्मात्स्वनुष्ठितात्। यः स्वधर्मपरित्यागादन्यधर्मं समारभेत्॥ तस्विलोकदुरात्मानं कुर्यात् सूर्यावलोकनम्। भिनत्तिवेदमर्यादां स्वजात्याश्रमगोचराम्। आश्रयत्यन्यधर्मांश्चयस्सपाषण्डउच्यते॥ इतिभगवद्गीतादिवचनैः "वरं स्वधर्मोविगुणोनपारक्यस्स्वनुष्ठितः। परधर्मेण जीवन्हि

सद्यः पततिजातितइतिमनुस्मृत्या ।
"अतियजेतनिजां यदिदेवतामुभयत-
श्च्यवते जुषतेप्यघमित्यभियुक्तोत्त्याच
स्वधर्मपरित्यागपूर्वकान्यधर्मस्वीका- ।
रिणोनिंद्यत्वेन "चक्रिणां लिङ्गिनमि
त्यत्रापि" यस्तु प्रथमं लिङ्गीभूत्वा
दुष्कर्मवशात्तदुपेक्ष्य चक्रीभवति प्र-
थमं चक्रीभूत्वातदुपेक्ष्यलिङ्गीवाभवति
"तम् दृष्ट्वासचैलं स्नानमाचरेदित्येवा-
र्थस्स्वीकरणीयः । यस्तुसन्तप्तचक्रा-
दिलिङ्गाङ्कितततनुरित्यस्यापि लिङ्गप-
दस्य लांछनपरत्वेन सन्तप्तचक्रादीनि
चतानि लिङ्गानि चतैरङ्कितततनुर्द्विजः
श्रौतस्मार्ताद्यनधिकारीत्यर्थः । ब्राह्म-
णस्य तनुर्ज्ञेयेत्यादिनाप्रागेव चक्राङ्कि
तनिषेधात् । "शङ्खचक्राङ्कितततनुं वैष्ण-
वं शिवदूषकम् । पश्येद्यदिप्रमादाद्वा

कुर्यात्सूर्यावलोकनमित्याद्यनुरोधाच्च।
यदि लिङ्गपदस्य शिवलिङ्गपरत्वम् त-
दाप्रथमम् तप्तमुद्रांकितोभूत्वाऽनन्त-
रम् तदुपेक्ष्यलिङ्गीभवतितद्वैपरीत्येन-
चक्रीवाभवति सोपिबहीष्कार्यइत्येवं-
पूर्ववद्वक्तव्यम्। अन्यथा। क्रिमिकीट-
पतङ्गेभ्यः पशवः प्रज्ञयाधिकाः। पशु-
भ्योपि नराश्रेष्ठास्तेषु श्रेष्ठाद्विजा-
तयः ॥ द्विजातिष्वधिकाविप्राविप्रे-
षुकृतबुद्धयः। कृतबुद्धिषु कर्तार-
स्तेभ्यस्सन्यासिनोधिकाः ॥ तेभ्योविज्ञा-
निनश्रेष्ठास्तेषुशङ्करपूजकाः। तेषुश्रे-
ष्ठामहाभागममलिङ्गाङ्गसङ्गिनः ॥ लि-
ङ्गाङ्गसङ्गिष्वधिकष्षट्स्थलज्ञानवान्
पुमान्। तस्मादप्यधिकोनास्ति त्रिषु-
लोकेषु सर्वदा ॥ भवन्द्यस्सर्वदापू-
ज्यस्संसारविजिगीषुभिः। बहुनोक्ते-

नकिंवत्ससएवाहम् नसंशयइति शि-
रोदेशेऽथवाकण्ठेहस्तेवक्षस्स्थलेपिवा
लिङ्गधारणहीनोयस्तंत्यजेदन्त्यजंय-
था ॥ कुण्डञ्चगोलकञ्चैवलिङ्गधार-
णवर्जितम् । तथादेवलकं चैवदृष्ट्वा
चान्द्रायणं चरेत् ॥ स्थूलाङ्गे त्विष्टलिं-
ङ्गन्तु योनधारयतेद्विजः । दृष्ट्वातं-
सहसापुत्रसचैलंस्नानमाचरेत् ॥ म-
स्तकेबाहुदण्डेवाललाटोर्ध्वप्रदेशके ।
अलिङ्गधारणंदृष्ट्वाकुर्यात् सूर्यावलो-
कनम् ॥ योनपूजयतेभक्त्यालिङ्गं
त्रिभुवनेश्वरम् । नासौस्वर्गस्य मोक्षस्य
न च राजयस्य भाजनम् ॥ शिवयोगि-
शरीरेतुनित्यं सन्निहितश्शिवः ॥ यो-
गीन्द्रपूजनात्तस्मात् साक्षात् संपूजित-
श्शिवः। येयोगिनंद्विषन्त्यज्ञास्सर्वपापे-
ष्ववस्थिताः । येशिवज्ञाननिरतं प्रद्वि-

षन्तीहयोगिनम् । विकल्पन्तेमहात्मानंयेमूढाश्शिवलिङ्गिनम् । तेयान्तिपितृभिस्सार्धं नरकेषुनसंशयइति शङ्करसंहितावीरागममुकुटागमशिवधर्मोत्तरादिवचनविरोधापत्तेः ।

"योवै स्वान्देवतामतियजेतेत्यादिश्रुतिस्मृतिभिर्यस्या देवताया दीक्षा येन गृहीता तस्याः यावज्जीवं तेन प्राधान्येनाराधनं करणीयमिति शास्त्रसिद्धान्तः प्रतीयते एवं स्थिते ये किंचित् कालं लिङ्गिनः किंचित् कालं चक्रिणः एवं रूपेणोभयाराधका भवन्ति तेषामुक्तसिद्धान्तविरुद्धत्वादवश्यंगर्हणीयत्वमनुभवपथमारोहति येतु हृदयतः सत्यभावेन रागद्वेषौ विहायैकदेवनिष्ठा स्तत्स्मात्तलीनाशया भवन्ति तेषां निन्दायामवसरोनास्ति तादृशानेव शिवयोगिनो रात्रिन्दिवं परमशिवध्यानेन शिवमयत्वं प्राप्तान् सांसारिकतुच्छविषयसुखविमुखानधिकृत्य कृमिकीटपतङ्गेभ्यः १ द्विजातिषु २ तेभ्योविज्ञानिनः ३ लिङ्गाङ्गसङ्गिषु ४ सवन्द्यः ५ इमानिवाक्यानि प्रवृत्तानिमन्तव्यानि शिरोदेशे १ कुण्डंच गोलकं च २ स्थूलाङ्गेत्विष्टलिङ्गन्तु, ॥ मस्तकेवा

हुदण्डेवा ४ एषां चतुर्णां वाक्यानां शैवशिवारा-धनविद्वेषस्याकर्त्तव्यत्वाभिप्रायकत्वम्, ‘‘योन पूजयते भक्त्या लिङ्गंत्रिभुवनेश्वरम्। नासो स्वर्गस्यमोक्षस्य न चराज्यस्य भाजनम्॥ अस्यश्लोकस्य श्रुतिस्मृतिपुराणसिद्धान्तबोधकत्वं बोध्यम्। शिवयोगिशरीरेतु १ ये योगिनं द्विषन्त्यज्ञा २ विकल्पन्ते महात्मानम् ३ एषां त्रयाणामपि पूर्ववत् शिवयोगिविद्वेषस्य जघन्यत्व-बोधकत्वं ज्ञेयम् ‘विरोधापत्तेरिति’ अस्य पूर्वेक्तेना-न्यथेत्यनेनान्वयः तत्रान्यथेत्यस्य ‘‘चक्रिणं लिङ्गिनं दृष्ट्वा सचैलस्नानमाचरेत्’’ इत्यादिनिषेधानां दी-क्षाविषयेत्यागोपादानशालिचलितलिङ्गविषयकत्वा-भावइत्यर्थः पूर्वग्रन्थे एकान्दीक्षां गृहीत्वा एनां परित्यज्यान्यां दीक्षां गृह्णन्ति अनन्तरं तामपि परि-त्यज्यतृतीयामेवं रूपाउपासनाविषयेऽलब्धपदाःपाष-ण्डपदार्थत्वेन दर्शिताः स्कन्दपुराणादैातु ‘‘शिवोक्तां जातिमर्यादां योतीत्यभुविवर्त्तते। सपाषण्ड इतिज्ञेयः सर्वकर्मबहिष्कृतः’’इति वाक्येन जातिमर्यादापरित्या-गःपाषण्डपदार्थ इत्युच्यते इति विरुध्यतेऽयं ग्रन्थ इत्याशङ्कते। ‘नन्वित्यादिना’

ननु ‘‘निगृहीताश्चयेराज्ञाचैार्य दोषेण कुत्रचित्। परदारान्विशन्तश्च-

रोषात्तत्पतिभिर्हताः ॥ असमानैश्चसं
स्त्रीणां श्चण्डालाद्यैश्चविग्रहम्। कृत्वा-
तैर्निहतायेच चण्डालादिसमाश्रिताः।
बन्धाग्निविषदाश्चैव पाषण्डाः क्रूरबु-
द्धयः ॥ शिवोक्तां जातिमर्यादां योती-
त्यभुविवर्त्तते । सपाषण्डइति ज्ञेयस्सर्व-
कर्मबहिष्कृतः॥ भ्रष्टोयस्स्वाश्रमाचारा-
त्पतितस्सोभिधीयतइति विष्णुपुरा-
णस्कन्दपुराणादौ चौर्यपरदारादिर-
तानामेव पाषण्डादिपदार्थनिर्वचनेन
पाषण्डं पतितं व्रात्यं इत्यत्रापि पाष-
ण्डपदं तत्परमेवेतिचेन्मैवम् नहि
पाषण्डपदस्यनियतार्थकत्वम् पुराण-
धर्मशास्त्रकोशादिषुबहुधातन्निर्वच-
नात्। तत्रापि शक्तिनिश्चायककोशेना-
क्तदिशा सर्वलिङ्गित्वस्यपाषण्डपदप्र-

वृत्तिनिमित्तत्वप्रतिपादनात् । तस्य चानियतदेवतोपासकस्मार्तेषु पूर्वोपपादितत्वेन तेषाम् तद्रूपत्वानपायात् । "अलिङ्गधारिणां दृष्ट्वाकुर्यात् सूर्यावलोकनमित्यादिना तेषामदर्शनीयतायाः वज्रलेपायितत्वाच्चेति । एवम् पूर्वोदाहृतनिषेधवचनानाम् निन्दापरत्वमंगीकृत्येदमुक्तम् ।

निगृहीता-श्चयेराज्ञाइत्युक्तिस्तु प्रासङ्गिकी द्रष्टव्या–समाधत्ते'नहीत्यादिना शब्दानामनेकार्थत्वदर्शनात् नायंविरोधइतिभावः

एतावताप्रबन्धेन "आततायिनमाहन्यादपि वेदान्तपारगमिति" न्यायेनाभ्युपगमवादेनच स्वविरोधिषु विरोधस्यौचित्येन तैस्सहविवादेविचारप्रौढिं प्रदर्श्येदानीं "सत्पक्षपातो हि धियांस्वभावः इतिस्थित्या निन्दावाक्यानां वास्तविकतात्पर्यमाह',

वस्तुस्थितिस्तावदाकर्ण्यताम् सावधानेन । तथाहि । यत्याश्रमोक्त-

प्रकरण पठितपाषण्डं पतितमित्यादि-
वाक्यानाम् "तिलकं चतुरस्रं वाद्वीपा-
श्वत्थदलाकृतिं। ललाटेधारयेद्यस्तु-
नतं पश्येदनापदि॥ लिङ्गधारणहीनो-
यस्तं त्यजेदन्त्यजं यथेत्यादिलिङ्गधा-
रणपठितवाक्यानाम् चक्रधारणप्रक-
रणपठिततदतिरिक्तनिन्दापरवाक्या-
नांच नहिनिन्दानिन्दितुमीष्टे। अपि-
तुस्तुत्यं स्तौतीतिन्यायेन तत्तत्प्रकरण-
विहिततत्तदर्थप्रशंसापरत्वमेववाच्यम्
अन्यथा "तपोयज्ञफलादीनां विक्रे-
तारोद्विजोत्तमाः। यतयश्चभविष्य-
न्ति बहवोऽस्मिन् कलौयुगे॥ शुक्लद-
न्ताजिताक्षाश्चमुण्डाःकाषायधारि-
णः। शूद्राधर्मं चरिष्यन्ति युगांतेसमुप-
स्थितइतिलिङ्गपुराणवचनेन। "दुर्भा-

जनदुरालापदुष्प्रतिग्रहतत्पराः। दुर्वि-
हारदुराचारा वृथागर्वविदूषिताः ॥
माठापत्यंचयतयः करिष्यन्तिधनाश-
या । ग्रामरायनिरता यन्त्रमन्त्रतन्त्र
विशारदाः ॥ रराडोपदेशनिरतास्तत्
सम्भाषणतत्पराः । सर्वेषामुपदेष्टारो
वैराग्येण विवर्जिताः ॥ वञ्चकाश्चभ-
विष्यन्ति यतयः कांचनाशया। सर्वत्र
विचरिष्यन्ति तृष्णायानगरादिषु ॥ व-
यसापयसादध्याक्षीरशाल्योदनेन च ।
यतिरेतैरनुदिनं प्रमत्तः पतितोभवेत् ॥
काषायधारिणः केचित् लंपटा विषये-
ष्विह। एकदंडास्त्रिदंडाश्च मुंडिनो
लोकवञ्चकाः॥ शिश्नोदरपराश्चान्ये वे-
श्यासक्तास्तथापरे। कपटानास्तिकाः
केचिद्वृथावेवेषधारिणः ॥ राजसेवां

प्रकुर्वन्ति पिबन्ति रुधिरं परे। खाद-
न्तिमांसं राजेन्द्र पिबन्ति मधुगर्विताः
तेषां सन्दर्शनादेव नरः किल्बिष-
माप्नुयादित्यादिस्कन्दादित्यपुराण-
वचनैर्यतीनामपिनिन्द्यत्वापत्तेः॥ एवं
च सकलवैदिक कर्मानुष्ठातॄणाम् दा-
नपात्रत्वादिनाप्रसिद्धानांच वैष्णव-
स्मार्तानन्दतीर्थीयानाम् बहुजनवन्द्य
यतीनाम् सर्वेषां चादर्शनीयत्वे प्रप-
ञ्चमर्यादोच्छेदापत्तेः। तेषां चतत्तत्
कर्मानुष्ठा तृत्वदानपातृत्व विधायकवे
दशास्त्रपुराणागमेतिहासविरोधपत्ति
श्चेत्यलम् मूषकग्रहणार्थम् गिरिखन
नेनेति॥

'वस्तुस्थितिस्तावदिति' अयमाशयः "अपश-
वोऽन्ये गोऽश्वेभ्यः पशवोगोअश्वाइति श्रौतवा-
क्यस्य पशुत्वविशिष्टानामपि हस्तिमहिषादीनां पशु-

त्वाभावं ब्रूवाणस्य पशुत्वनिषेधे न तात्पर्यम् किन्त्वी-
दृशोगवाश्वयोर्महिमा यदग्रे पशवोपि हस्त्यादयो-
ऽपशवउच्यन्ते इत्येवं रूपयोर्गवाश्वयोः प्रशंसायामेव
तात्पर्यम् मीमांसकैःकल्प्यते 'तदेवोच्यते नहिनिन्दा
निन्दितुमीष्टे अपि तु स्तुत्यमेव स्तौतीति अने-
नैव न्यायेन तिलकं चतुरस्रं वा १ लिङ्गधारण-
हीनोयः २ शैवान् पाशुपतांश्चैव ३ पाषण्डं पतितं
व्रात्यं ४ चक्रिणं लिङ्गिनं दृष्ट्वा ५ यस्तुसंतप्तचक्रादि-
६ मुनेरन्नं नभोज्यक्तम् ७इत्यादिवाक्यानां स्वस्वमतापे-
क्षयाऽन्यमतनिन्दकानां यथासम्भवं स्वस्वमतस्तुता-
वेवतात्पर्यं मन्तव्यम् न तु तन्निन्दायाम् अन्यथा केनापि
प्रकारेण सत्यभावेन परमेश्वरनिष्ठावतामुपासकानां
कथं निन्द्यत्वमुपपद्येत। दम्भेनधर्ममनुतिष्ठन्तो वञ्च-
कास्तु, सर्वमतएव निन्दिताभवन्तीति तेषां निन्द्य-
त्वेन तत्तन्मते निन्दावसरोनास्ति ततश्च स्वस्वता-
त्पर्यविषयीभूतार्थमादाय नेमानि वाक्यानि परस्परं
विरुन्धतीति सूपपादितोभवत्यविरोधः 'अन्यथा
तपोयज्ञकलादीनामिति' तत्रान्यथेत्यस्य शैवान्
पाशुपतानित्यादिवाक्यानां वैष्णवादिग्रन्थेषु धृतानां
मतान्तरहेयत्वबोधकानां स्वीयमतस्तुतिमात्रता-
त्पर्यकत्वानंगीकार इत्यर्थः स्वार्थतात्पर्यकत्वाभ्यु-
पगमइति फलितम्। अस्य यतीनामपि निन्द्य-

त्वापत्तेरित्यनेनान्वयः। एतद्ग्रन्थकारलेखात् "तपोयज्ञफलादीनां विक्रेतारो द्विजोत्तमाः। यतयश्चभविष्यन्ति बहवोऽस्मिन् कलौ युगे"१शुक्लदन्ताजिताक्षाश्चमुण्डाःकाषायधारिणः।शूद्रा धर्मंचरिष्यन्तियुगान्ते समुपस्थिते। दुर्भोजनदुरालापादुष्प्रतिग्रहतत्पराः दुर्विहारदुराचारा वृथागर्वविदूषकाः॥ माठापत्यंचयतयः करिष्यन्तिधनाशया॥ ग्रामण्यनिरतायन्त्रमन्त्रतन्त्रविशारदाः। ४ खण्डोपदेशनिरता स्तत् संभाषण तत्पराः॥ सर्वेषामुपदेष्टारो वैराग्येण विवर्ज्जिताः ५ याचकाश्च भविष्यन्ति यतयः काञ्चनाशयाः। सर्वत्र विचरिष्यन्ति तृष्णाया नगरादिषु ६ वयसा पयसा दध्ना क्षीरशाल्योदनेनच। यतिरेतैरनुदिनं प्रमत्तः पतितो भवेत् ७ काषायधारिणः केचित् लंपटा विषयेष्विह। एक दण्डा स्त्रिदण्डाश्च मुण्डिनो लोकवञ्चकाः ८ शिश्नोदरपराश्चान्ये वेश्यासक्तास्तथापरे। कपटा नास्तिकाः केचित् वृथा वै वेषधारिण इत्यादिनिषिद्धाचारबोधकवाक्यानां स्वार्थे तत्पर्यंनास्तीति लभ्यते। परमिदमत्यन्तमनुचितम् एषां वाक्यानां स्वार्थे एव तात्पर्यात् कलियुगोत्पन्नानां बहूनां निन्द्यत्वमापाद्येतेति चेत् का क्षतिः सन्त्येव कलियुगभवाः प्रायेण निन्द्या-निन्द्याचाराः नहितेषां परिग्रहमात्रेण पापकर्मणां

पुण्यत्वं भविष्यति, वस्तुस्थितेरन्यथयितुमशक्यत्वान्नहि बहूनां वेश्यासक्तत्वेन वेश्यासङ्गोपिधर्मत्वं प्राप्स्यति तस्मादसमञ्जसएवायं ग्रन्थः । तथाप्यशेषविधिनिषेधार्थपरिपालनस्याशक्यत्वात् । प्रायश्चित्तीयत्वादिदानीं प्रायः नकश्चन मुक्तोभवतीति निषिद्धाचारिषूपेक्षयैव वर्त्तितव्यमिति कथंचित् सङ्गमनीयम् ।

श्रीशिवायनमः । ननुमाभून्नामोक्तस्मृतिभिर्लिङ्गधारणस्यनिन्द्यत्वम् तथाप्यमरकोशे ब्रह्मवर्गे । "धर्मध्वजीलिङ्गवृत्तिरवकीर्णीक्षतव्रत इतिलिङ्गवृत्तिपदस्य निषिद्धनाममध्यपठितत्वेन धर्मस्येवध्वजम् चिन्हम् यस्यसःधर्मध्वजी लिङ्गधारणमेव वृत्तिर्जीवनम् यस्यसलिङ्गवृत्तिः मिथ्यानुष्ठानलक्षणजीविकावतोनाम अव व्रतान्तरे कीर्णम् स्खलितम् रेतोयस्य सोऽवकीर्णी । क्षतम् व्रतम् यस्यसः क्षतव्रतः नष्ट-

ब्रह्मचर्यस्य नामानीति तद्व्याख्यान-
भूतलिङ्गाभट्टीये । लिङ्गवृत्तिपदस्य
मिथ्यानुष्ठानजीविपरत्वेन व्याख्या-
नाच्चलिङ्गधारणमवद्यमेवेतिचेन्न । म-
नुस्मृतौ। "धर्मध्वजस्सदालुब्धः छाद्मि-
कोलोकदंभकः । बैडालवृत्तिकश्चैवहिं-
स्रस्सर्वाभिनिन्दकइत्यादिना निन्द्या-
न्विगणय्य" "अलिङ्गीलिङ्गिवेषेणयो-
वृत्तिमुपजीवति । सलिङ्गिनांवहत्येन
स्तिर्यग्योनौचजायते" इत्यनन्तरस्मृ-
तौ। कंचिल्लिङ्गधारिब्राह्मणमपिधार्मि-
कमन्नस्वर्णादिकम् सजातीयानामेव-
दास्यामीति नियमवन्तम् श्रुत्वाकश्चि
द्धूर्तः स्मार्तः कपटलिङ्गधारिवेषेणतद्गृ
हम् प्रविश्य अन्नस्वर्णादिकम् गृहित्वा
जीवति। मध्यान्हसमयसमागतोह्यति
थिरन्नम् दातृगृहे भुक्त्वा स्वीयसुकृत-

जालम् तस्मै दत्त्वा तदीयपापपञ्ज-
रम् परिगृह्य गच्छतीति पुराणगाथानु-
रोधेनायमपि कपटवेषधारी तदीय-
पापपञ्जरम् प्रतिगृह्य गच्छति नियमभ-
ङ्गकारित्वादनन्तरम् तिर्यग्यौनचजा-
यतइत्युक्तत्वेनामरकोशपठितलिङ्ग-
वृत्तिपदस्यापि तत्परत्वावश्यम् भावा-
न्नगुरुकृतदीक्षालब्धलिङ्गधारिब्राह्मण-
परम् । अतएवमिथ्यानुष्ठानलक्षण-
जीविकावतोनामानीति लिङ्गाभट्टकृत-
व्याख्यानमपि संगच्छत इति । पुराण-
वचनानितुसर्वलिङ्गँ स्थापयतीत्यादि-
श्रुत्युपबृंहणत्वेन स्कान्दलैङ्गिकवच-
नानि कानिचिदुक्तान्येव । अन्यान्य-
पिलिङ्गधारणविधायकान्युदाह्रियन्ते।
तत्रतावत्पद्मपुराणे शिवगीतासूपनिष-
त्सु सीतावियोगविह्वलरामचन्द्रान्ति-

कम् गतवति भगवतिलोपामुद्रावल्लभे-
तमभिवन्द्य कान्ताविियोगजनितदुःख-
शान्तिकरतत्प्राप्त्युपायो वक्तव्य इति
राघवेन पृष्टे निखिलसुरासुरदुर्जेयश-
क्रजित्कुंभकर्णाद्यनुजतनुजवर्गवेष्टित-
दशकण्ठकण्ठलुण्ठनमन्तरेण जनकत-
नयाप्राप्तिर्नभवति तच्चपरमशिवप्रसा-
दाधीनमित्युक्त्वा तत्प्रसादार्थम्वेदसा-
रशिवसहस्रनामभिर्मनुदीक्षाम्विधा-
यैतैर्नामभिरुपास्यमानोमहादेवः सा-
क्षात्कृतोभूत्वादिव्यास्त्रशस्त्रादिकम् दा-
स्यति तेन चरावणम्निहत्य सीताम्प्रा-
प्स्यसीत्युक्त्वाऽन्तरधादित्यर्थक "मोक्तु-
मैच्छत्ततः प्राणान्सानुजो रघुनन्दनः।
लोपामुद्रापतिर्ज्ञात्वा तस्यसन्निधिमा-
गम' दित्यारभ्य "एवमुक्त्वा मुनिश्रेष्ठे-
गते तस्मिन्निजाश्रममित्यन्तेनाभिधाय

अनन्तराध्याये "अथरामगिरौरामः पुण्ये गोदावरीतटे। शिवलिङ्गं प्रतिष्ठाप्य कृत्वादीक्षां यथाविधि॥ भूतिभूषितसर्वाङ्गोरुद्राक्षाभरणैर्युतः। अभिषिच्यजलैः पुण्यैर्गौतमीसिन्धुसम्भवैः। अर्चयित्वा वन्यपुष्पैस्तद्वद्वन्यफलैरपि॥ भस्मच्छन्नो भस्मशायीव्याघ्रचर्मासनेस्थितः॥ नाम्नांसहस्रं प्रजपन्नक्तन्दिवमनन्यधी"रित्यादिना। दाशरथितपःप्रभावमुपवर्ण्य समनन्तरम् दुष्करतपःप्रभावात् साक्षात्कृतेन परमशिवेन पाशुपतादिदिव्यास्त्रशस्त्रादिकम् दत्त्वा तत्त्वोपदेशः कृत इत्यभिहितम्। ततश्चशिवराघवसंवादे मोक्षसाधारणकारणतयाभक्तिमार्गप्रदर्शनानन्तरम् "भक्तियोगो-

मयाप्रोक्त एवं कुरु रघूत्तम । सर्व-
कामप्रदात् मत्तः किमन्यच्छ्रोतुमिच्छ-
सीति परमशिवेनाभिहिते । "भगव
न्मोक्षमार्गोऽयं त्वयासम्यगुदाहृतः ।
तत्राधिकारिणंब्रूहि तत्रमे संशयो महा-
निति" रामप्रश्ने । ब्रह्मक्षत्रियविट्शू-
द्रास्त्रियश्चात्राधिकारिणः । ब्रह्म-
चारीगृहस्थोवानुपनीतोऽथवाद्विजः ।
वनस्थोवाऽनस्थो वायतिपाशुपतव्रती॥
बहुनात्रकिमुक्तेन यस्यभक्तिश्शिवार्च-
ने । सएवात्राधिकारीस्यान्नान्यचित्तः
कथंच नेति अधिकारिणो विगणय्य-
अनन्तरम् "जडोन्धोबधिरोमूकोनि-
श्शौचःकर्मवर्जितः । अज्ञोपहासोऽ-
भक्तश्चभूतिरुद्राक्षधारणे । लिङ्गिनो-
यश्च वाद्वेष्टि तेनैवात्राधिकारिणः"इ-
त्यपवर्गानधिकारिनिरूपणे लिङ्गाङ्गि

दूषकाणाम् मोक्षानधिकारित्वप्रदर्श-
नाल्लिङ्गधारणसिद्धिः लिङ्गाङ्गीनिन्द-
कानाम् अनधिकारित्वप्रदर्शनेन लि-
ङ्गधारणवताम् तदासक्तचित्तानांच
मोक्षाधिकारित्वमर्थात्सिद्धमित्यव-
गंतव्यम् । अपिच । महाजनोयेनग-
तस्सपंथा इति न्यायेन कश्यपात्रिभ-
रद्वाजादिमहर्षिसंघेन हिरण्यगर्भना-
रायणादिदेवतासमाजेन लक्ष्मीसर-
स्वतीप्रमुखमहाशक्तिभिरन्यैश्चात्य-
न्ताभ्यर्हितशिवलिङ्गधारणस्याचरित-
त्वेन तस्यवैदिकजनपरिग्राह्यत्वम-
कामेनापि करणीयम् । तथाहि ।
लैङ्गे । "कश्यपात्रिभरद्वाजगौतमाद्या-
महर्षयः । धारयन्ति सदालिङ्गमुत्तमां-
गेविशेषतः । नारायणोपि भगवान्

देवाब्रह्मादयोनघाः । धारयन्त्युत्तमांगेषु शिवलिङ्गमनामयम् । लक्ष्मीसरस्वतीमुख्यास्स्वललाटोर्ध्वदेशके । धारयन्त्यप्रमादेन लिङ्गं त्रिभुवनेश्वरमिति । स्कान्दे । शङ्करसंहितायाम् । उरस्थलेहरिर्लिङ्गं धृत्वा मूर्ध्नि पितामहः । लिङ्गस्थं मां समाराध्य स्वं स्वं पदमवापतुः ॥ मल्लिङ्गं मस्तकाद्यंगे धृत्वा शक्रपुरोगमाः । देवा मां लिङ्गमध्यस्थं पूज्य स्वं स्वं पदं ययुः । लक्ष्मीसरस्वतीमुख्या देव्योमल्लिङ्गमादरात् । धृत्वा निजाङ्गे तल्लीनभावाजग्मुः परंसुखमिति । सिद्धान्तशिखामणौ । ब्रह्मविष्ण्वादयोदेवामुनयोगौतमादयः । धारयन्तिसदालिङ्गमुत्तमाङ्गेविशेषतः ॥ लक्ष्म्यादिशक्तयस्सर्वाशिवभक्तिविभा-

विताः । धारयंत्यलिकाग्रेषु शिवलि-
ङ्गमहर्निशमिति । अत्रच उत्तमाङ्गेग
लेवापीत्यादिवचनावगमितलिङ्गधा-
रणास्थानविशेषप्रदर्शनपूर्वकम् देव-
र्षीणाम् लिङ्गधारणम् स्पष्टमेव ब्रह्म-
वैवर्ते "रौद्रम् समभ्यर्च्यहिलिङ्गमा-
दौशिलामयं चारुहरिस्स्वभक्त्या ।
सुदुर्लभंवैष्णवमाद्यमग्र्यमवाप्तवाने-
षपरंपदंतत्" । आदित्यपुराणे ब्रह्मा
पूजयतेनित्यम् लिङ्गं शैलमयंशुभम् ।
तस्यसंपूजनादेवप्राप्तं ब्रह्मत्वमुत्तमम् ॥
शक्रोपिदेवराजेन्द्रोलिङ्गं मणिमयं
शुभम् । भक्त्यापूजयतेनित्यं तेनशाक्र-
त्वमाप्तवान् ॥ इन्द्रनीलमयं लिङ्गं
विष्णुः पूजयतेसदा । विष्णुत्वं प्राप्त-
वांस्तेन वैकुण्ठंच सनातनम् ॥ सो-

सोमुक्तामयंलिङ्गं धनदोहैमलिङ्गकं। वायुःपित्तलजं लिङ्गंवसवः कांस्यलिङ्गकम्॥ अश्विनौमरुतश्चैवस्फाटिकं लिङ्गमादरात्। दिवाकरस्ताम्रमयं पन्नगास्तुप्रवालकम्॥ असुराः कार्षजं लिङ्गं पिशाचास्त्रपुजं तथा। एवं देवास्सगन्धर्वासयक्षोरगराक्षसाः॥ पूजयन्ति सदालिङ्गमीशानं सुरनायकमिति। पराशरपुराणे। रौद्रंलिङ्गं महाविष्णुर्भक्त्या शुद्धं शिलामयं। चारुचित्रं समभ्यर्च्चलब्धवानुत्तमं पदं॥ भारतेद्रोणपर्वणि। देवदेवस्त्वचिन्त्यात्माऽजय्योविष्णुरव्ययः। सर्वरूपं भवंज्ञात्वालिङ्गेऽर्चयतितं प्रभुं॥ तस्मिन्नभ्यधिकां प्रीतिं करोतिवृषभध्वज इति। कूर्मपुराणे। ब्रह्मणः सृष्टिकतृत्वंविष्णोर्दान-

वमर्दनं । स्वर्गाधिपत्यमिन्द्रस्य शिव-लिङ्गस्यपूजनादिति ।

"धर्मध्वजी लिङ्गवृत्तिरवकीर्णीक्षतव्रत" इत्यमरकोशे लिङ्गवृत्तिपदेन भस्मा परमेश्वरतोषणार्थं लिङ्गधारिणां ग्रहणं न प्राप्नोति वृत्तिपदस्य जीविकायां प्रसिद्धत्वेन देवताप्रदर्शनद्वारा जीविकार्थमेव ग्रहणस्यान्याय्यत्वादित्याह । माभूदित्यारभ्य लिङ्गाभट्टीयकृतं व्याख्यानमपि सङ्गच्छत इत्यन्तग्रन्थेन वाक्यानितुस्पष्टार्थकानीति न व्याख्यायन्ते "अथरामगिरौ रामः पुण्येगोदावरी तटे । शिवलिङ्गं प्रतिष्ठाप्य कृत्वादीक्षां यथाविधि ॥ भूतिभूषितसर्वाङ्गोरुद्राक्षाभरणैर्युतः । अभिषिच्यजलैः पुण्यैर्गौतमीसिन्धुसम्भवैः ॥ अर्चयित्वा वन्यपुष्पैस्तद्वद्वन्यफलैरपि । भस्मच्छन्नोभस्मशायी व्याघ्रचर्मासनेस्थितिः । नाम्नां सहस्रं प्रजपन् नक्तंदिवमनन्यधी" रित्यादिशिवगीताप्रदर्शितरामचन्द्रतपः प्रयोजकागस्त्यभगवत्कृतोपदेशानन्तरमधिकारानधिकारनिरूपणावसरे "अत्रोपहासोऽभक्तश्चभूतिरुद्राक्षधारणे । लिङ्गिनो-यश्चवा द्वेष्टि तेनैवात्राधिकारिणः इति लिङ्गधारिद्वेषिणां पाशुपतदीक्षायामनधिकारोक्त्या लिङ्गधारणस्य तत् कर्तॄणां च महात्म्यमर्थात्सिद्धं भवति राम-

चन्द्रस्य तपोवर्णनेतु "शिवलिङ्गंप्रतिष्ठाप्य" इत्युक्त्वा "वालुकावेदिकामध्ये तल्लिङ्गंस्थाप्यरावणः । अर्चयामास गौरीशंपुष्पैराहुतिगन्धिभिरित्यादिवाल्मीकिरामायणप्रदर्शितरावणकर्तृकशिवस्थापनवत् वेदिकादौ स्थापनमेवदर्शितम् परन्तु लिङ्गिनोयश्चवाद्वेष्टीत्युक्तिः लिङ्गसत्त्वमवश्यं गमयति "एवं । कश्यापात्रिभरद्वाजगौतमाद्यामहर्षयः । धारयन्तिसदालिङ्गमुत्तमाङ्गेविशेषतः । इत्यादिलिङ्गन्त्रिभुवनेश्वरमित्यन्तंर्लिङ्गपुराणवाक्यन्तथोरः स्थलेहरिंलिङ्गमित्यादि धृत्त्वामूर्ध्नि पितामह इत्यादिशङ्करसंहितावाक्यत्रयमेवं "ब्रह्मविष्णवादयोदेवा मुनयोगौतमादय" इत्यादि सिद्धान्तशिखामणिवाक्यद्वय विधिबोधकपदाभावेपि । महाजनाचारदर्शनेन लिङ्गधारणस्यकर्तव्यत्वंव्यञ्जयन्ति । "रौद्रं समभ्यर्च्यहिलिङ्गमादौ शिलामयं चारुहरिः स्वभक्त्या । इत्यादि ब्रह्मवैवर्तादिवाक्यैः शिलामयस्येन्द्रनीलमणिमयस्यचरुद्रलिङ्गस्यपूजनात् विष्णोः शैलमयस्यपूजनात् ब्रह्मणोमणिमयस्यपूजनाच्छक्रस्यमुक्तामयस्यपूजनाच्चन्द्रस्यसुवर्णमयस्यपूजनात् कुबेरस्यापिशिलामयस्यशिवलिङ्गस्यपूजनात् वायोः कांस्यलिङ्गस्यपूजनाद्वसूनांस्फटिकलिङ्गस्यपूजनात् अश्वमरुतां ताम्रमयस्यार्चनाद्दिवाकरस्य प्रवाललिङ्गपूजनात्पन्नगानांका-

षजलिङ्गपूजनादसुराणांरङ्गमयलिङ्गपूजनात् पिशाचानां स्वस्वाधिकारप्राप्तिबोधनद्वारा सर्वेषां देवानां तत्तच्छिवलिङ्गे शिवाराधकत्वमिष्टशिवलिङ्गसान्निध्यञ्चसूचितम्भवति । एवम्भारते द्रोणपर्वणि वर्तमानं सर्वभूतभवं ज्ञात्वेत्यादिवाक्यमपिव्याख्येयम् ।

नन्वत्रभारतब्रह्मवैवर्तादित्यपुराणादिवचनैस्सर्वदेवानामन्येषांच तत्तत्फलोद्देशेन पीठादावेव शिवलिङ्गपूजनमभिहितमिति कथं शरीरधृतलिङ्गपूजापरत्वं तद्वचनानामितिचेन्मैवं॥ स्कान्दलैङ्ग्यादिपूर्वोदाहृतवचनैरिन्द्रोपेन्द्रहिरण्यगर्भादीनाम मस्तककन्धरादिधारणस्थानप्रदर्शनपूर्वकं लिङ्गधारणविधानेन लिङ्गधारिणाम् करपीठपूजायास्साधितत्वेनचभारतादिवचनानाम् तद्विरुद्धदारुपीठाद्यधिकरणशिवलिङ्गपूजापरत्वायोगेन

हस्ताधिकरणकपूजाविधायकत्त्वे सि-
द्धे नारायणेन्द्रादीनाम्लिङ्गधारणसि-
द्धेर्वज्जलेपायितत्वादिति । किंच ईश्व-
रंतमहम्वन्देयस्यलिङ्गमहर्निशं । यज-
न्तेसहभार्याभिरिन्द्रज्येष्ठामरुद्गणा
इति । ब्रह्माण्डपुराणेचिदंबरसंहि-
तावचनेनापीन्द्रादीनाम् लिङ्गधारणं
साक्षादेवसिद्धंभवति तत्र यजदेवपू-
जासंगतिकरणदानेष्वितिसूत्रेण य-
जधातोस्संबन्धरूपसंगतिकरणार्थक-
त्वेनेन्द्रज्येष्ठा इन्द्रप्रमुखामरुद्गणादे-
वा यस्य शिवस्य शरीरभूतं लिङ्गंभा-
र्याभिस्सहयजन्तेऽविभाज्यसंबन्धेन
धारयन्तीत्यर्थः । नन्वेवमपीन्द्रादीनां
हेमपीठादौमणिमयादिलिङ्गपूजास-
मयेचन्दनलेपादिकादाचित्कसंबन्धे-

नापि यजधात्वर्थसंगतिकरणरूपार्थसिद्धेरविभाज्यसंबन्धेन धारयन्तीत्यर्थः कथं सिध्यतीतिचेन्न । यावदहः कालवाचकाहःशब्दस्य निशाकालमात्रवाच्यनिशाशब्दस्यचयजधात्वन्वये सार्वकालिकधारणसिद्धावविभाज्यसंबन्धेनैवतत्सिद्धेः । नचयजधातोस्संगतिकरणार्थकत्वेऽपिसंगतेर्यावदहर्निशाकालीनत्वसिद्धावपि अन्तर्यजन्त इत्येवार्थः स्वीक्रियतेतथाच नतेषां स्थूलाङ्गलिङ्गधारणसिद्धिरितिवाच्यंअन्तःपदस्यवचनेऽदृष्टत्वेनाध्याहारदोषापत्तेः“मल्लिङ्गंमस्तकाद्यङ्गेधृत्वाशक्रपुरोगमा इत्यधिकरणविशेषणसमर्पणपूर्वकस्थूलाङ्गलिङ्गधारणविधायकपूर्वोदाहृतशङ्करसंहितावचनानुरोधाच्चेति

पीठादावेवेति । वस्तुतस्तत्रेष्टापत्तिरुचिता अष्टादशसु पुराणेषुभारतादीतिहासेषुचवर्तमानानांसर्वेषां वक्यानामेकस्मिन्नेवार्थेउपसंहारस्साहसे फलाभावात्बहूनिवाक्यानिसोमनाथमल्लिकार्जुनकेदारेश्वरादिज्योतिर्लिङ्गमाहात्म्यप्रख्यापकानिसन्ति बहूनिवेदिप्रतिष्ठितशिवलिङ्गपूजामाहात्म्यबोधकानि सन्ति तेषां सर्वेषामिष्टलिङ्गविषयकत्वोपपादनेउपपादयितुरप्रामाण्यापत्तेस्तस्माल्लिङ्गपुराणकामिकागमादिवाक्यैरेवस्वेष्टमेतद्ग्रन्थकृद्भिः साधयितुमुचितम् । लिङ्गात्मकशिवविग्रहेशिवपूजाविधायकानितुपरःसहस्राणि वाक्यानिसन्तीति नास्तित्तदंशेकस्यापिविवादएवमेवेश्वरंतमहंवन्दे । यस्यलिङ्गमहर्निशंयजन्तेसहभार्याभिरिन्द्रज्येष्ठामरुद्गणा इति चिदम्बरसंहितावाक्ये यजधातोः"यजदेवपूजासङ्गतिकरणदानेष्विति" पाणिनीयधातुपाठदर्शितसङ्गत्यर्थकत्वोपपादनक्लेशाश्रयणमपिव्यर्थं यजन्तइत्यस्यात्यन्तप्रसिद्धपूजयन्तइत्यर्थइवरुङ्ग्ब्धन्तइत्यर्थेविचारवतां श्रद्धानुत्पत्तेः बहूनां वाक्यानां स्वार्थसाधकनां सद्भावेन कस्यचिद्वाक्यस्यैताद्दशक्लिष्टव्याख्यानेन स्वेष्टोपयोगित्वोपपादने प्रयोजनाभावाच्च । एवमेवहेमपीठादौ मणिमयादिशिवलिङ्गस्येन्द्रादिकर्तृकपूजासमयेहस्तकरणकचन्दनलेपादिनायजधातुप्रतिपाद्यसङ्-

स्यर्थस्यनिर्वाहादविभाज्यसम्बन्धस्य न सिद्धिरित्याशं-
क्याहअहर्निशमिति" तद्घटकस्याहः शब्दस्य याव-
द्दिनवाचकतयानिशाशब्दस्ययावद्रात्रिवाचकतयाका-
लाध्वनोरत्यन्तसंयोगे द्वितीयेतिसूत्रविहितात्यन्त-
संयोगार्थकद्वितीयायाः प्रापकतार्थकतयाभक्तजीवना-
धारभूतदिनरात्रित्वव्यापकत्वस्य सङ्गतिकरणरूपय-
जनेबोधनेनाविभाज्यसम्बन्धः सिध्यतीतिसमाधानम्
अन्तर्लिङ्गधारणेनान्यथासिद्धिशङ्कायामध्याहारदो-
षेणसमाधानंचबोद्धव्यम् ।

आगमवचनानितुयावज्जीवलिङ्गधार-
णपूजाविधायकानि कानिचिदुक्तान्येव
अन्यान्यपिकामिकादिवातुलान्तागमे-
ष्वनुसन्धेयान्येव विस्तरभयान्नेहलि-
ख्यन्ते नन्वागमानामप्रामाण्यात्कथं
तद्बोधितलिङ्गधारणादेः प्रामाण्यमि-
तिचेन्न आगमाप्रामाण्यंवदन्वादीप्रष्ट-
व्यः। किमशेषागमानामप्रामाण्यम् उत
वातुलान्ताःकामिकाद्याः शिवप्रोक्ताः
शिवागमा इत्यनेन परमशिवप्रणीतत्वे

न प्रसिद्धानामष्टाविंशतिसंख्याकानांशै
वागमानामप्रामाण्यं आहोस्विन्नाराय
णावतारविशेषबुद्धादिप्रणीतयागीय
हिंसायाअधर्मसाधनत्वप्रतिपादकवेद
विरुद्धजैनबौद्धाद्यागमानामप्रामाण्यं
वानाद्यः ।"नगायत्र्याःपरं मन्त्रं अघो-
रान्नापरोमन्त्रोनास्तितत्त्वंगुरोःपरमि-
त्यादिनाच वेदमातृगायत्र्यादिमहाम
न्त्रनित्यानुष्ठानपुरश्चरणादेरशेषब्रा
ह्मणावश्यकत्वेन । "जननं जीवनं प-
श्चात्ताडनं बोधनं तथा । अथाभिषे-
कोविमलीकरणाप्यायनेततः ॥ तर्पणं
दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः । न-
मस्स्वाहावषड्ढुं वौषट्फडंतं हृदादि
कमित्यतेमन्त्रपल्लवाः । मंत्राणांपल्लवः
पादः प्रणवः शिरउच्यते । शिरः पल्लव

संयुक्तो मन्त्रोभीष्टफलप्रदः ॥ ऋषिंमू-
र्ध्निमुखेच्छन्दः देवतां हृदिविन्यसेत् ।
आधारेबीजशक्तिंचपादयोः कीलकं
न्यसेत् ॥ मूकस्सुप्तो मृतोनग्नोवीर्य-
हीनोवृथाफलः । भुजंगः कीलितः
शून्यईदृङ्मन्त्रा वृथाफलाः ॥ न्यासं
विनाभवेन्मूकः सुप्तःस्यादासनं विना ।
पल्लवेनविनामन्त्रोनग्नस्तुपरिकीर्तितः ॥
शिरोहीनोमृतः प्रोक्तः वृथामन्त्रोगुरुं
विना ॥ ऋषिदैवतछन्दोभिर्वर्जितस्तु
भुजंगमः मृतादुष्टायदत्तो येऽनिर्वी
र्यश्चाधिकाक्षरः । अन्तरं नैकबीजेन-
व्याप्तः कीलितउच्यते । यस्यजप्यं
शृणोत्यन्यस्समन्त्रः शून्यउच्यते इत्या-
दिनाजननजीवनादिमन्त्रसंस्कारा-
दिनमस्स्वाहावषट्कारादिपल्लवहृद-

यादिस्थानविशेषन्यसनीयत्वमपिदेव
ताछन्दोबीजादिसमर्पकाणां सूक्तत्वसु
सत्वादिमंत्रदोषतन्निवर्त्तकासनशुध्या
दिप्रतिपादकानामङ्गावरणादिविधा
यकानां तत्तदागमांतर्गतवचनानामप्रा
माण्येनायन्त्यादिमहामन्त्रनित्यानुष्ठा
नपुनश्चरणादेरसिद्धेः। नद्वितीयः।
"शिवसंस्कारिणां चैवज्ञानधर्मवतांस-
तां। अष्टाविंशतिभेदेन प्रोक्तं शैवमि-
तिस्मृतं॥ "कामिकं योगजं चिन्त्यं
कारणं त्वजितंतथा। दीप्तं सूक्ष्मं सहस्रं
चांशुमत्सुप्रभेदकं॥ विजयं चैव निश्वा-
संस्वायं भुवमथानलं। वीरं चरौरवं
चैवमकुटं विमलं तथा॥ चन्द्रज्ञानं च
विम्बञ्च प्रोद्गीतं ललितं तथा। सिद्धं
सन्तानशर्वोक्तं पारमेश्वरमेवच॥ वा-

तुलं किरणं चैवेत्यष्टाविंशतिसंहिताः ।
इत्यागमेषु वेदेषु वेदान्तोपनिषत्सु च ।
"धर्मस्तु शास्वतः प्रोक्तो मुक्तेर्माहेश्वरो-
महानिति । वीरागमोक्तरीत्या मुक्त्यु-
पायत्वेन प्रसिद्धशैवागमानामप्रामा-
ण्ये "शिवे शैवागमे शैवे धर्मे शिवपरिग्रहे ।
जङ्गमे प्राणलिङ्गैक्ये शिवलिङ्गार्चने गुह ॥
शिवस्थानेषु सर्वेषु वाराणस्यादिकेषु च ।
विपरीता भवेद्बुद्धिर्यस्य स्यात्स बहिर्नरः ।
शिवनिन्दापरो मूढः शिवशास्त्रविनि
न्दकः । तस्य नो निष्कृतिर्दृष्टा क्वापि शा
स्त्रे पि केन चेति । स्कान्दशिवधर्मोत्तरा
दिवचनैर्मरणान्तप्रायश्चित्तसूचकनि
ष्कृत्यभावबहिष्कार्यत्वादिविधानवि-
रोधापत्तेः । नह्यप्रामाणिकार्थनिन्दा
यां दोषोद्घाटनं युक्तम् । किञ्च । स्याव

रलिङ्गप्राणलिङ्गप्रतिष्ठाकालकर्तव्यद्वा
दशसंस्कारविधायक "कुण्डमण्टपनि-
र्माणं तत्तसंस्कारमेवच। वास्तुपूजाचह-
वनं पालिकासुप्रतिष्ठितमित्यादीनां ।
अधः पट्टिकाद्याज्यप्रतारिकान्ततत्
स्थानविशेषे भुवन" तत्त्व, कला, मंत्र,
पदवर्णाध्वन्यासविधायकवचनानां
स्थावरेकर्षणादिप्रतिष्ठान्तं प्रतिष्ठा
द्युत्सवान्तञ्चकर्तव्यतत्कर्मविधायकव-
चनानां कामिककारणाद्यागमान्तर्गत-
त्वेनपुराणादावभावेनच तदप्रामाण्ये-
तद्विहितसंस्काराद्यभावेन सकलवै-
दिकजनावश्यकस्थावरलिङ्गप्रतिष्ठा-
द्यसिद्धेः । अपिच श्रीनीलकण्ठशिवा-
चार्यचरणकृतभाष्येऽङ्गावयवाद्यनन्त-
मांगल्यगुणगणमणिजलधेः परमशिव-
स्येत्येतद्ग्रन्थेनपरमशिवं विशिष्यका-

नितान्यङ्गानिइत्युक्तेः "सर्वज्ञतातृप्तिर-
नादबोधस्स्वतन्त्रता नित्यमलुप्तताच।
अनन्तशक्तिश्चविभो र्विधिज्ञाः षडा-
हुरङ्गानिमहेश्वरस्य । ज्ञानं विरागतै-
श्वैर्यं तपः शक्तिः क्षमाधृतिः ॥ स्रष्टृत्व-
मात्मसम्बधोह्यधिष्ठातृत्वमेवच । अ-
व्ययानिदशैतानि नित्यंतिष्ठन्तिशंकर
इति । शैवागमवचनैरङ्गावयवनिरू-
पणेनन शङ्कराचार्यकृतप्रपञ्चसारा-
दिग्रन्थे त्र्यंबकषडक्षरीप्रभृतिमन्त्रानु-
ष्ठानपुरश्चरणप्रयोगाद्युपयोग्यङ्गाव-
रणादिनिरूपणस्यागमवचनैरेवकृत-
त्वेन तद्विरोधापत्तेश्च । नहि-
भाष्यकारैरप्रमाणिकवचनान्युदाह्रिय-
न्ते।एवं व्यासमन्वादिऋषिप्रणीतस्मृ-
तीतिहासपुराणादीनामिव । त्वंदेवेषु
ब्राह्मणोस्यहं मनुष्येषु ब्राह्मणः। विप्रा

धिकोरुद्रमहर्षिरिति ब्रह्मर्षित्वेन नि-
रवद्यं निरञ्जनमिति नित्यत्वेन च प्र-
सिद्धपरशिवप्रणीतागमप्रामाण्यस्या-
परिहार्यत्वाच्चेति। न चरमः पक्षः वि-
ष्णोर्जगन्मोहनीवेषधारणसमये ऽशेष-
जगन्मोहकत्वस्य रामाद्यवतारेसीता-
लक्ष्मणवियोगादिजनितव्यामोहस्य
स्वतोपिसत्वेनच परप्रतारकबुद्धावता-
रप्रणीतवेदविरुद्धागमानां अप्रामा-
ण्येत्विष्टापत्तेः। ननुकूर्मपुराणे। "एवं
संचोदितोरुद्रोमाधवेन मुरारिणा।
चकारमोहशास्त्राणि केशवोपि शिवे-
रितः कपालं लाकुलंशाक्तं भैरवं पूर्व-
पश्चिमं। पाञ्चरात्रं पाशुपतं तथान्यानि
सहस्रश इति शिवकेशवयोरुभयोरपि
मोहशास्त्रकर्तृत्वप्रतिपादनेन तथा-
न्यानिसहस्रश इत्यन्यशब्देन शैवाग-

मानामपि ग्रहणात्तेषामप्यप्रामाण्यमेवेति चेन्न। तत्रैव "निर्मितं हि मयापूर्वंव्रतं पाशुपतं शुभंगुह्याद्गुह्यतरं सूक्ष्मं वेदसारं विमुक्तये॥ एषपाशुपताचारस्सेवनीयोमुमुक्षुभिरिति। रुद्राक्षलिङ्गधारणरूपपाशुपतव्रतप्रतिपादकागमस्य श्रौतत्वं प्रतिपाद्य "अन्यानिचैवशास्त्राणिलोकेस्मिन्मोहनानिवै । वेदवादविरुद्धानिमयैवकथितानित्वित्युक्त्वा वामं पाशुपातं सोमं लाकलं चैवभैरवं । न सेव्यमेतत्कथितं वेदबाह्यं तथेतरदिति यानिशास्त्राणि दृश्यन्ते युगेऽस्मिन् विविधानितु । श्रुतिस्मृतिविरुद्धानितेषां निष्ठाहितामसी॥ कापालं पांचरात्रंच यामलं वाममर्हतं । एवं विधानिशास्त्राणिमोहनार्थानितानित्विति । श्रुतिस्मृतिविरुद्धानामेवाप्रामाण्यस्वी-

कारात् । किरातवेषधारिपरमेश्वरप्रणीतशाबरतन्त्रबुद्धावतारप्रणीतबौद्धाद्यागमानामेवान्यपदेनग्रहणात् । न नुतर्हि शैवागमानां श्रुतिस्मृतिसारमयत्वं कथमितिचेदुच्यते पूर्वोक्तसर्वलिङ्गंस्थापयतीत्याद्यनेकश्रुतिस्मृतिविहितलिङ्गधारणविधायकत्वेन गौतममन्वाद्याचारविषयस्थावरलिङ्गप्रतिष्ठाविधायकत्वेन कालाग्निरुद्ररुद्रोपनिषदादिसिद्धविभूतिरुद्राक्षधारणविधायकत्वेन तत्वमसीत्याद्यनेकश्रुतिबोधितजीवब्रह्मैक्यस्वरूपलिङ्गाङ्गसम्बन्धबोधकत्वेन छान्दोग्यबृहदारण्यकादिश्रुतिविहितानेकार्थत्वाच्चेति ॥

---

इतिश्रीमद्वेदवेदान्तपुराणागमेतिहाससारभूतश्रीमद्विशिष्टाद्वैतसिद्धान्तस्थापनाचार्य पाषण्डाब्जमहागजपांचरा-

# अप्रालेयचण्डचण्डकिरणाद्वैतकु-
# म्भिकुम्भदलनरौद्रपञ्चानन
# श्रीमन्नंदीस्वरविरिचितायां
# लिङ्गधारणचन्द्रिकायां
# प्रथमो भागः ।

---

आगमाप्रामाण्यंवदन्वादीद्रष्टव्य इति । अत्र विकल्पत्रयोपन्यासपुरःसरसमाधानग्रन्थस्यायमाशयः । विकल्पितकल्पेषु सर्वेषामागमानामप्रामाण्यमितिकल्पः कामिकादिवातुलान्तागमानामप्रामाण्यमिति कल्पश्चतावत् केनाप्यास्तिकेनस्वीकर्तुन्नशक्यतेसकलास्तिकगणैः प्रामाण्येनस्वीकृतस्य गायत्र्यादिमन्त्राणाम्पुरश्चरणविधेस्तान्त्रिकमन्त्राणांदीक्षाविधेर्मन्त्राङ्गभूतशिरःपल्लवादिपारिभाषिकार्थस्यागमेष्वेवनिरूप्यमाणत्वात् । अवशिष्यते तृतीयः कल्पः बुद्धजिनादिनास्तिकमण्डलप्रणीतागमानामप्रामाण्यमिति तत्रेष्टापत्तिरेवभवतामिवास्माकमपिबौद्धाद्यागमानामप्रमाण्येपिशैवागमप्रमाण्याक्षतेरिति ।

महामहोपाध्याय पण्डित श्रीशीवकुमार
मिश्रशास्त्रि विरचितशरन्नामिकायां
लिङ्गधारणचन्द्रिकाव्याख्यायां
प्रथमभागः समाप्तः ।

॥ श्रीः ॥

# विश्वाराध्याय नमः ।

---

## लिङ्गधारणचन्द्रिकायामुत्तरभागः ॥

नन्वेतावता लिङ्गधारणसिद्धावपि मृतस्य ब्राह्मणस्य दाहक्रिया विधीयते भवदनुष्ठीयमानखननस्य कुत्राप्यविधानात् कुतस्तत्सिद्धिरिति चेदुच्यते । ऋग्वेदे "कर्दमेन प्रजाभूतामयिसम्भवकर्दम„ इतिमंत्रेणतत्सिद्धिः । कर्दमेन पृथिव्या प्रजाः तिर्यङ्मनुष्यादिनानाविधजीवकोटयः । भूताः संजाताः । सजलमृत्पिण्डवाचककर्दमशब्दप्रयोगेण प्रधानोपादानभूतायां पृथिव्यां जलादेरुपसर्जनविधयासहकारित्वमित्यवगन्तव्यं। तदभावे घनीभूतपृथिवीमात्रस्य देहनिर्माणे

पयोगित्वाभावात् तादृशीं महीं प्रति मृतपुरुषेण प्रार्थ्यते। मयिसम्भवकर्दम इति हेसजलमृत्पिण्डात्मकपृथिवि। मयि॥ कालपरिपाकतो मरणे प्राप्ते- द्वात्रिंशत्पर्वयुक् समाध्यपरनामकत्व- द्गर्भस्थिते मच्छरीरे सम्भवन्त्याच्छाद्य विलीनावस्थांगमयित्वा दुरितनिवृ- त्तिपूर्वकं मामुत्तमलोकप्राप्तिमन्तं कुर्वि- त्यर्थः। "महींदेवीं विष्णुपत्नीमजूर्यां- प्रतीचीमेनांहविषायजामहइति परा- यते नक्षत्रेष्टिपठितमन्त्रेणापि खनन- सिद्धिर्भवति अत्रज्ञातिबंधुसमेतकर्त्रा मृतपुरुषशरीरं शिबिकादिनासमीपं प्रापय्य तत्रकर्तव्ययावत्संस्कारानन्तरं बिलप्रवेशकरणे। विनियुक्तस्यास्या- यमर्थः एनां महींदेवीं प्रति हविषा

मृतपुरुषशरीररूपेण यजामहइति त-
थाचाग्नौ हूयमानपुरोडाशाज्यादि-
हविष इवपृथिवीबिलनिक्षिप्तशरीरस्य
तत्रैवविलीनताप्रसक्त्या तस्याश्च-
समाधौ गोपनं विनानुपपन्नत्वात्सि-
द्धिरिति सङ्केतग्राहकत्वेन श्रुतिस्मृ-
त्यादिनिखिलशब्दप्रमाणापेक्षिततया
स्वतः प्रमाणत्वेन च प्रसिद्धनिघंट
वचनादपि पर्य्यवसानगत्या तत्सिद्धिः
तथाहि पाञ्चभौतिकदेहस्य पञ्चता का-
लधर्म इति पञ्चभूतानाम् संपुटीकर-
णेन देहारम्भस्तस्य कालपरिपाकवा
त्पंचत्वप्रसक्तौ पञ्चावयवानां पञ्च भू-
तेष्वेकीकरणमावश्यकंतत्रवाय्वाका
शयोरप्रत्यक्षत्वेन तत्रानुक्रमणं व्यव-
हारयोग्यं नभवतीति पृथिव्यप्तेज-

स्स्वेव संयोजनं कार्यं तत्राप्यग्निज-
लयोः पृथिव्याधारकत्वेन सर्वाधारपृ
थिव्यामेव निक्षेपणं कृत्वा तत्वसंयो-
जनमावश्यकं । अतएवोक्तंपराशर-
स्मृतौ । "शरीरं पञ्चतत्त्वाख्यं तत्वं
तत्वेनयोजयेत् । तत्रापि पृथिवीतत्वे
योजनं मोक्षसाधनमिति । अपिच ।
अवसानेग्निसंस्कारवतामप्यसङ्गांस-
मिलितदेहस्य दहनदह्यमानत्वेऽप्य-
स्थ्यादिस्वरूपाङ्गशेषस्य पृथिवींग-
च्छेति मंत्रेण महीतले गङ्गांभसिवाक्षेप
णमावश्यकं तथाचैकदेशस्याग्निदाह्य-
त्वमवशिष्टस्य पृथिवीजलादिनिक्षेप
इत्यङ्गीकारेऽर्धवैरस्य प्रसङ्गात् सर्वाधा
रभूता वनिक्षेपणमेवकर्तव्यं। तदुक्तंकू
र्मपुराणे । दग्धेपि देहेपुनरंगेशेषेनि-

क्षिप्यतेऽसौभुविवाजलेवा ॥ तस्मान्निक्षे पविधिर्बलीयान्निःशेषभावादपुनर्विधा नादिति । नचोदाहृतश्रुतिस्मृत्यादिभिस्सर्वत्रपिधानविधाने दहनविधायकपितृमेधादिपठितश्रुत्यादीनां निर्विषयत्वप्रसंग इतिवाच्यं पूर्वोदाहृतपद्मपुराणशातातपमन्वादिस्मृतिवचनानुरोधेनचसामान्यतोऽपिखननविधायकवाक्यानांच्छागपशुन्यायेनलिङ्गाङ्गिब्राह्मणविषयत्वमंगीकृत्य दहनविधायकवाक्यानां तदतिरिक्तविप्रादिविषयत्वेन सङ्कोचे बाधकाभावात् अन्यथाकर्मद्वयविधायकवाक्यानां परस्परविरोधेनोभयोरप्यवैदिकत्त्वापत्तेः

लिङ्गधारणस्यकर्तव्यतामारभ्यलिङ्गधारणमूलभूतश्रुतिस्मृतिकामिकाद्यागमानाम्प्रामाण्यपर्यन्ता वहवोऽर्थाः पूर्वभागेनिरूपिताइदानींलिङ्गधारिणां

प्रयाणोत्तरंतन्मतेऽनुष्ठीयमानायांतद्देहस्यभूमिखात निक्षेपात्मकप्रतिपत्तौप्रमाणमुपन्यस्यते तत्र “ कर्दमेनप्रजाभूताम् देवींविष्णुपत्नीमितिऋगद्वयम् शरीरं पञ्चतत्वाख्यमितिपाराशरस्मृत्यादिचप्रमाणत्वेनोपन्यस्तंपितृमेधप्रकरणपठितश्रुत्यादीनां विरोधमाशङ्क्य च लिङ्गाङ्गसङ्गिब्राह्मणविषयकत्वेन खननवाक्यानां तदितरिक्तविषयकत्वेन पितृमेधवाक्यानां व्यवस्थापनं क्रियते परस्परविरुद्धार्थवाक्यानां विना व्यवस्थां प्रामाण्यायोगेन व्यवस्थाया आवश्यकत्वात् अत्रैवप्रसङ्गात् विशिष्टाद्वैतसिद्धान्तमपि किञ्चिदुपपादयति । अत एवदर्पण इत्यादिना

अतएवदर्पणे ब्रह्मविद्याविद्भुर्यैरुक्तं जीवब्रह्मणोरभेदाङ्गीकारे ‘द्वासुवर्णास युजासखायासमानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलंस्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीतिद्वे ब्रह्मणीवेदितव्ये परं चापरं चेति “भेदप्रतिपादकवाक्यविरोधेन भेदाङ्गीकारे “नेहनानास्ति किञ्चन एकएव रुद्रो न द्वितीयोावत-

स्येयत्रनान्यत्पश्यति नान्यच्छृणोतिना न्यद्विजानातिसभूमे"त्याद्यभेदविधाय कविरोधेन चोभयोरप्रामाण्यप्रसक्त्या विशिष्टाद्वैतपक्ष एव अंगीकरणीयः त त्पक्षेतुस्थूलसूक्ष्म चिदचित्प्रपञ्चाकारश क्तिविशिष्टयोरभेदमादायाद्वैतवाक्या- नां विशेषणविशेष्यभेदमायद्वैतवाक्या नामपि प्रामाण्यसिध्याविरोधाभावा- दिति।

विरोधाभावादिति। द्वौसुवर्णासयुजासखाया- इत्यादि। द्वौतुपर्णावित्यर्थः सुपांसुलुगित्यादिशास्त्रेण द्विवचनस्यडादेशः। अत्रोर्ध्वमूलमधःशाखमश्वत्थमाहु- रित्यादिना शरीरस्य वृक्षत्वेनवर्णना च्छरीरमेव वृक्ष- शब्देनोच्यते लौकिकपक्षिणोरिवशरीररूपवृक्षाश्रित- त्वाज्जीवात्मपरमात्मनोःपक्षित्वेन वर्णनं क्रियते समा- नंवृक्षं परिषस्वजातइति जीवात्मपरमात्मानावुभाव- पि एकमेव शरीररूपं वृक्षमधिष्ठितवन्तौ तयोर्जीवा- त्मपरमात्मनोर्मध्येऽन्योऽर्थाज्जीवः पिप्पलं कर्म्मफलं स्वादुउपलक्षणमिदं स्वस्वकर्म्मानुसारेण स्वादु अस्वा-

द्वुवाअत्ति भुङ्क्ते ऽन्यः परमात्माऽनश्नन् अविद्याया अभावेनालुप्तचैतन्यशक्तितया शरीरधर्म्मासम्बद्धः । तथा च कर्म्मबन्धाभावेन कर्म्मफलंसुखंदुःखं चाभुञ्जा-नएवा भिचाकशीति देदीप्यते अस्यांश्रुतौ जीवब्रह्म-णोर्भेदः प्रतिपादितोभवति एवं द्वे ब्रह्मणीवेदितव्येप-रञ्चापरञ्चेत्यत्रापि । "एकमेवाद्वितीयं ब्रह्म नेहनाना-स्ति किञ्चनमान्योतोऽस्ति द्रष्टानान्योतोस्ति श्रोतात्ये-त्यादौ "यत्रनान्यत्पश्यति नान्यच्छृणोति इत्यादौच जीवब्रह्मणोरेकत्वं प्रतिपाद्यते इति परस्परश्रु-तिविरोधान्नकेवलं द्वैतन्नाप्यद्वैतं मन्तुं शक्यतेऽपि तु विशिष्टाद्वैतपक्ष एव मन्तव्यस्तदर्थस्तु विशि-ष्टञ्चविशिष्टञ्च विशिष्टे विशिष्टयोरद्वैतं विशिष्टा-द्वैतमिति अत्र सूक्ष्मचिदचित्प्रपञ्चशक्तिविशिष्टं ब्रह्म एकविशिष्टपदेनोच्यते इदमेवाव्याकृतचिदचि-त्प्रपञ्चविशिष्टमप्युच्यते स्थूलचिदचित्प्रपञ्चशक्ति विशिष्टं ब्रह्मापरविशिष्टपदेनोच्यते तयोरेकत्वम-स्तीति सिद्धान्तस्वरूपम् अर्थात्स्थूलावस्थापन्नस्य सूक्ष्मावस्थापन्नस्य चान्तर्यामिप्रधानभूतन्नियामकम् परमेश्वरतत्वमेकमेव तस्य चेतनानां जीवानामन्त-र्यामिचेतनरूपत्वात् तदपेक्षयानान्योऽतोऽस्ति द्रष्टे-त्यादि नान्यच्छृणोतीत्यादि च श्रुतिवाक्यमुपप-द्यते शरीरेन्द्रियाद्यनेकवस्तुवैशिष्ट्येऽपि देवदत्त

एकएवेदानीं स्वगृहेऽस्तीति व्यवहारस्य प्रवृत्तिवत् एकमेवाद्वितीयं ब्रह्मेत्युपपन्नम्। द्वासुपर्णाइति तु स्वरसतयैवोपपन्नमिति न कस्यापि श्रुतेर्विरोधइत्याह विरोधाभावादिति।

नच दहनस्य विप्रविषयत्वं खननस्य जात्यन्तरविषयत्वमितिवाच्यं तेषां वेदविहितकर्माधिकाराभावात् खननस्यैव विप्रविषयत्वं दहनस्य जात्यन्तरविषयत्वमिति वैपरीत्यापत्तेश्चाचारविरोधस्योभत्रापितुल्यत्वादित्यलं ननूदाहृतमंत्रैः खननस्या पाततः प्रसक्तावपि मृतपुरुषं खनेदिति विधिवाक्याभावेननवेदत्वमिति चेन्नैवं प्रेतंदहेदितिविध्यभावेपिविधिप्रयोजकरूपसंपत्या पितृमेधादिपठिततत्तन्मन्त्रलिङ्गैः प्रेतं दहेदिति विधिकल्पनवत्पूर्वोदाहृतानेकमन्त्रलिङ्गै र्विधिप्रयो

जकरूपसंपत्याच मृतपुरुषं खनेदिति विधिकल्पनौचित्यादिति । वस्तुतस्तु सदानंदोपनिषदि" शैलं लिङ्गमुरस्थ-लेधार्यं विप्रेणेत्यादिना लिङ्गधारणं विधाय साक्षादेव खननमपिविधीयते "शिवातनूरचित्ताद्बिले निक्षिपेदिति शिवाः लिङ्गरूपशिवसम्बन्धिन्यो या-स्तनवस्तास्तनूरचित्तान्मरणादूर्ध्वं बि-लेनिक्षिपेत् खननक्रियां कुर्यादित्यर्थः उपनिषदन्तरे " सयावज्जीवोम्रियते अथैनमवनयेहरन्तीत्यनेन खननं वि-धीयते शिवभक्तो जीवः यावन्म्रियते मृतोभवति अथमरणानन्तरमेनं भक्त मवनयेभूम्यै हरन्तिपृथिवीगर्भेसमा-धिक्रियां कृत्वा भक्तदेहहरणं कुर्यादि त्यर्थ इति न चावनये हरन्तीत्यत्रा-

वन्यामग्निनाहरन्तीत्यर्थः किं नस्या-
दितिवाच्यं विप्राय गादद्याददद्याद्दा-
नं स्वगोत्रायेत्यादौ विप्रादेर्गोदाना-
दिसंप्रदानत्ववदस्याएव चतुर्थ्याहरण
संप्रदानत्वबोधनात् वाक्येऽग्निपदा-
भावे नाध्याहारदोषापत्तेश्च "भूमौवि-
निक्षिपेद्देहं भक्तानां शिवयोगिनां । अ-
ज्ञात्वादहनं कुर्यान्नरकंवाऽधिगच्छति॥
नशरीरं दहेद्धीमाञ्छिवभक्तस्य कस्यचि-
त्। प्रेताशौचं परोक्षेच वर्जयेन्मुनिसत्त-
शिवभक्तोमृतोयस्तु दहनादिर्नविद्य-
ते। दग्धस्य दहनंनास्तिपक्कस्य पचनं न-
हि॥ ज्ञानाग्निदग्धदेहानां नचदाहो न-
चक्रियेति" शिवधर्मशास्त्रवचनैर्भक्तानां
दहननिषेधपूर्वकखननविधानेनतद्वि
रोधापत्तेश्चेति अपिच। "शरीरं पार्थि

वंबाह्यं लिङ्गंयत्तद्धिपार्थिवम् । उभयं पार्थिवं यस्माद्गोप्यं रन्ध्रेतु पार्थिवइति वातुलागमवचनानुरोधेन शरीरलिङ्गयोः पृथिवीप्रकृतिकत्वेन तत्रैव विलीनतौचित्याच्च । नच शरीरस्य पांचभौतिकत्वेन तेजस्येव शरीरहरणं किंनस्यादितिवाच्यं सर्वाधारपृथिव्याऽत्यन्ताभ्यर्हितत्वेन प्रथमातिक्रमकारणाभावेन च पृथिवीतत्वएवैकीकरणौचित्यादितितथाचसावकाशनिरवकाशयोर्निरवकाशं बलीय इतिन्यायेन अग्नीषोमीयवाक्यस्येव खननविधायकवचनानांबलीयस्त्वेन दहनविधायकवाक्यनां "माहिंस्यात्सर्वाभूतानीति" वाक्यस्याग्नीषोमीयपशुव्यतिरिक्तविषयत्ववद्ब्राह्मणविशेषव्यतिरिक्तविषयत्वेनसंकोचःकार्यः।नचोदाहृतश्रुत्या बोधित-

खननस्य यतिविषयत्वमितिवाच्यं सर्व-
त्रशरीरमित्यादौ यतिवाचकपदाभावे
नोभयत्र खननाचारानुरोधेनोभयसा-
धारण्येन खननविधायकश्रुतीनांसंको-
चासहिष्णुत्वात् उदाहृतश्रुतिस्मृत्या-
दौलिङ्गाङ्गिब्राह्मणबोधकपदसत्वाच्चे-
ति । किंच । भारतेऽनुशासनपर्वणि,,
गौरीं प्रतिशिववचनेन दहनखननो
भयोरपि विहितत्वेन वेदतुल्यभार-
तबोधितखननस्य लिङ्गधारिब्राह्म-
णविषयत्वमावश्यकमेवतथाहि । "स्व
भावमरणं नाम नतदात्मेच्छयाभवेत् ।
तदामृतानां यत्कार्यं तन्मेशृणु यथा-
तथा ॥ भूमौसंवेशयेद्देहंनरस्य विन-
शिष्यतः । निर्जीवं शृणुयात्सद्योवास
नात्तुकलेवरं ॥ " माल्यगन्धैरलंकृत्य
सुवर्णेनच भामिनि । श्मशानेदक्षिणे-

देशे चितान्नौ प्रदहेन्मृतं । अथवा निक्षिपेद्भूमौ शरीरं जीववर्जितमिति। नचात्रदहनस्य ब्राह्मणविषयत्वं खननस्य जात्यन्तरविषयत्वमितिवाच्यं विनिगमकाभावेनवैपरीत्यापत्तेः । न चदहनस्य श्रौतत्वेन तदेवविनिगमकमितिवाच्यं खननस्याप्यनेकश्रुतिस्मृत्यादिबोधितस्य पूर्वमुपपादितत्वात्" लिङ्गंशिवोभवेत्क्षेत्रमङ्गंसं योगश्राश्रयः । तस्माल्लिङ्गांङ्गसंयुक्तो योपिसोत्याश्रमीभवेत् ॥ प्रथमः खननोपायोद्वितीयोदहनात्मकः । तृतीयो ऽदर्शनोपायस्स्वदेहं त्यक्तुमिच्छताम् ॥ अदर्शनमितिश्रेष्ठमवियोगोङ्गलिङ्गयोः। तथैव खननं श्रेष्ठं विशुद्धे पृथिवीबिले ॥ तयोरभावे दहनं शिखिकर्पूरयोगवदिति । वातुलोत्तरतन्त्रानुरोधा-

च्चेतिअथैवमुक्तप्रणाल्या लिङ्गाङ्गिब्राह्मणानांसर्वेषामपि दहननिषेधे अर्थोंसमर्थे।विद्वान् जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्यादिवाक्यविहितसाधनसंपन्नस्य ब्राह्मणमात्रस्य "तमेतंवेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानशनेनेति"श्रुत्यापादितब्राह्मणवेदसाधनीभूतयज्ञस्यावश्यकर्तव्यत्वेन"कश्यपाऽत्रिभरद्वाजगौतमाद्यामहर्षयइत्युदाहृतलिङ्गपुराणवचनविहितलिङ्गधारणवतामेवकश्यपादीनां शिवपुराणे वायवीयसंहितायां जटालिङ्गधारणनिरूपणप्रस्तावेआहिताग्नित्वप्रतिपादनादाधुनिकानामपिकेषां चित्पूर्वशैवानामुक्तसाधनवतामाहिताग्नित्व दर्शनात्तेषामपिदहननिषेधप्रामाणाहिताग्निभिर्दहन्ति य-

ज्ञपात्रैरितिकल्पसूत्रविरोधस्तेन चा-
हिताग्निमात्रस्यावसानेवैतानाग्निहो-
त्रपात्रैस्सहदहनविधानादिति चेन्मैवं
मंस्थाः । एवं मृतांसवर्णांस्त्रीद्विजातिः
पूर्वमारिणीम् ॥ दाहयेदग्निहोत्रेण यज्ञ-
पात्रैश्च धर्मवित् । भार्यायैपूर्वमारण्यै-
दत्वाग्नीनन्त्यकर्मणि । पुनर्दारक्रियां
कुर्यात्पुनराधानमेवचेति ॥ मनुस्मृत्या
यज्वपत्न्याः प्रथमं मरणप्रसक्तौ यागी-
याग्निहोत्रपात्रैस्सहतस्याद्दहनविधा-
नेन द्वितीयविवाहात्पूर्वमेव यज्व-
नोपि मरणप्रसक्तावग्निहोत्रपात्राणां
पूर्वविनियुक्तत्वेन तद्विषयेकल्पसूत्रवि-
हितयागीयाग्निहोत्रपात्रकरणकदह-
नस्यानित्यत्वस्वीकारात् नचकल्पसूत्रे
यज्ञपात्रैर्वेति विकल्पविधानादरण्या-
दिव्यतिरिक्तपात्राग्निहोत्रैर्जायादह-

नेप्यरणिमथनयोस्सत्वेनयज्वनो मर-
णप्रसक्तौ पुनरग्निमुत्पाद्यारण्यादिना-
सहदाहः क्रियत इति वाच्यं यज्ञपा-
त्रैश्चधर्मविदितिमनुस्मृत्या किञ्चि-
त्पात्रव्यतिरिक्तपात्रैर्दहनाप्रतीतेः त-
थापि यागीयाग्निहोत्रेणयज्वनोदह-
नाभावेन कल्पसूत्रविहितकर्मानित्य-
त्वस्यापरिहाराच्च किं च "प्राजापत्यां
निरूप्येष्टिं सर्वस्वेन सदक्षिणां। आ-
त्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृ-
हादिति मनुस्मृत्याऽहिताग्नेर्विप्रस्य
तुर्याश्रमस्वीकारसमयसमवधाने प्र-
जापत्येष्टिं निर्वर्त्याग्नीनामात्मारो-
पणं कृत्वा स्वगृहात्प्रव्रजेदितिविधानेन
तस्यच "सर्वकर्मनिवृत्तस्य ध्यानयोग-
रतस्य च" इत्यादिपूर्वोदाहृतवचनेन
दहननिषेधवत्तद्विषयेऽप्यनित्यत्वाच्च

नच संन्यस्तस्ययज्वनोदहनाभावेपि तत्पत्नीदेहावसानपर्यंतं पात्राणि संगृह्यावसानकाले पात्रैस्सह दहनं क्रियत एवेतिवाच्यम् आहिताग्निमग्निभिर्दहंतीति श्रुतपुल्लिङ्गतानिर्वाहायाहिताग्निपदस्य यज्वपरत्वेन तस्य दहनाभावेऽनित्यत्वापरिहारात्। नचलिङ्गव्यत्ययेनाहिताग्निपदस्य तत्पत्नीपरत्वमपि स्वीक्रियत इतिवाच्यम्। यागीयाग्निहोत्रपात्रोभयकरणकदहनस्य तस्या अप्यभावेन कल्पसूत्रविहितकर्मणोऽनित्यत्वावश्यम्भावात्। देशकालवैपरीत्यादिनायज्ञपात्रविच्छेदे तत्सहभावेनापि दहनाभावात्। संन्यस्यद्यज्वाऽग्निहोत्रात्मारोपणासमकालमेवपात्राणां पृथग्दहनं कृत्वा संन्यस्यतीतिपक्षेतत्पत्नीदेहावसानपर्यंतं यज्ञ

पात्राभावाच्चेति । अपिच "गृहस्थस्तु यदापश्येद्वपुः पतितमात्मनः । अपत्यस्यैवचापत्यंतदारण्यं समाश्रयेत् ॥ संत्यज्य ग्राम्यमाहारं सर्वंचैवपरिच्छदं । पुत्रेषुभार्य्यांनिक्षिप्यवनंगच्छेत्सहैववा॥ अग्निहोत्रं समादायगृह्यं चाग्निपरिच्छदं ॥ ग्रामादरण्यं निःसृत्यनिवसेन्नियतेन्द्रियः॥ वैतानिकंच जुहुयादग्निहोत्रं यथाविधीतिस्मृत्या यज्वनस्तदन्यस्य वागृहस्थस्य ब्रह्मचारीगृहीभवेद् गृही भूत्वा वनीभवेद्वनीभूत्वा प्रव्रजेदित्याश्रमक्रमविधायकवाक्यविहितवानप्रस्थाश्रमसमयबन्धे स्वयमाहिताग्निश्चेत्प्राजापत्येष्टिं कृत्वात्मन्यग्नीनारोप्य पुत्रादौभार्य्यान्निवेश्यारण्यप्रवेशं कुर्य्यात्। यद्वा वानप्रस्थस्याग्निहोत्रादिकर्म्माधिकारस्य विद्यमानत्वेन वैताना-

ग्निहोत्रपात्रादिकं परिगृह्य भार्यया स-
हैव वनं गत्वा वन्यवृत्त्यैव जीवन्नग्नि
होत्रादिसकलकर्मानुष्ठानमाचरन्नेव-
निवसेदित्यभिहितत्वेन वानप्रस्थस्य
यज्वनो देहावसानप्रसक्तौ "वानप्रस्थं
योगिनं च लिङ्गैक्यं भिक्षुकं यति-
मित्यद्युदाहृतशातातपस्मृत्या तस्य
खननविधानेन कल्पसूत्रविहितयागी-
याग्निहोत्रपात्रकरणकदहनस्य नित्य-
त्वाभावाच्च । नच तस्य दहनाभावेपि
तत्पत्नीदेहावसानपर्यन्तं पात्रादिकं
संस्थाप्य तैस्सह क्रियतइति वाच्यम् प-
त्नीसहभावेनैवाश्रमस्वीकारेण तस्या-
अपि वानप्रस्थत्वेन दहनायोगात्तर्हि वै-
तानपात्राणां कागतिरिति चेदग्निहो-
त्रेण पात्राणां पृथग्दहनं वानप्रस्थ-
पत्नीशरीरस्य खननमेव कार्यमिति

गृहाणा । अस्तुवावानप्रस्थपत्न्या दहनं ।
तथापियजमानातिक्रमे वैतानाग्नेरभा
वेन पात्राणां देशकालवैपरीत्येन वि-
च्छेदे लौकिकाग्निना दहनेपि सूत्रवि-
हितकर्मानित्यत्वस्य वज्रलेपायितत्व-
मेव । ननुकल्पसूत्रविहिताग्निदहनस्य
श्रौतत्वेन बलवत्त्वान्नशातातपादि-
स्मृत्या तस्यानित्यत्वकथनं युक्तमिति-
चेन्न । श्रुतावपितस्यानित्यत्वबोधनात्
तथाच "येऽग्निदग्धायेअनग्निदग्धाये
वा जाताः कुलेममभूमौदत्तेन पिण्डेन
तृप्ता यान्तु परांगतिमिति,, पिण्डप्रदाने
श्रूयतेअत्र चानग्निदग्धकोटिप्रविष्टत्व-
माहिताग्नीनामप्यस्ति । नचात्र "न्यूनं-
द्विवार्षिकं बालंनिधने नतु दाहयेदि-
ति" बालानां दहननिषेधात्तेषामेवान-

ग्निदग्धकोटौप्रवेशइति नसूत्रविहि-
ताग्निदहनानित्यत्त्वमितिवाच्यं। "अ
संस्कृतप्रमीता ये त्यागिन्यो याः कुल-
स्त्रियः। दास्यामितेभ्योविकिरमन्नन्ता-
भ्यश्च पैतृकमिति" तेषां पृथक्कॢप्त-
विधानात्। नापियतीश्वराणामन-
ग्निदग्धकोटिप्रवेशः "नतस्यदहनंका
र्यंनचपिण्डोदकक्रिया। एकोद्दिष्टं न क
र्तव्यं सन्यस्तानां कदचनेति,,। शौनक-
स्मृत्या यतीश्वराणां पिण्डप्रदाननिषे
धात्। नापिजात्यन्तराणां प्रवेशः शू-
द्राणां वेदमन्त्रेण विधानायोगेन "य-
जमानकुलेजातादासादास्योन्नकांक्षि
णः"। इत्यादिपुराणवचनैरेव तृप्तिवि-
धनादिति। अतः परिशेषप्रमाणेन दे-
शान्तरे विजनप्रदेशमृतानाम् पुत्रका-
णां कर्त्राद्यभावेनाग्निसंस्काराभावव-

तां यजमानकुलोद्भवानामाहिताग्नी-
नामनाहिताग्नीनांवागृहस्थानामर-
ण्यादिप्रविशिष्टानां देहावसाने खन-
नक्रियायामुक्तानामाहिताग्निवानप्र-
स्थानां चानग्निदग्धकोटौप्रवेशः कार्य्यं
इति । एवंच कल्पसूत्रादिविहिताग्नि
दहनस्यानित्यत्वसिद्धौ लिङ्गधारिद्वि-
जाना मुदाहृतानेकश्रुतिस्मृत्यादिकद-
म्बेन खननक्रिया विधानादाहिताग्नी-
नामपितेषां देहावसानपूर्वकाले प्राजा
पत्येष्टिं कृत्वात्मन्यग्नीनारोप्य मृतानां
खननक्रियैवकर्तव्या तत्पत्नीनामप्य-
वसाने पात्राणां पृथग्दहनं कृत्वा खन-
नमेव कर्तव्यमिति अवगन्तव्यम् ।
किन्तु मार्गशैवानां (पूर्वशैवानां) दह-
नकरणे खननाकरणेच प्रत्यवायविधा
नादाहिताग्न्यनाहिताग्निसाधारण्ये

न तद्विषये दहनविधायकसकल-
वाक्यानामपि संकोच एव अङ्गीकर-
णीयः। तदुक्तं सदानन्दोपनिषदि।
"शिवलिङ्गधरं विप्रंविपन्नन्तुनदाह-
येत्। यदिवादाहयेत्तस्य ब्रह्महत्यात-
दाभवेत्" इति॥ स्कान्दे "मृतलिङ्गाङ्गि-
नोदेहमज्ञानाद्दहतेयदि। शिवालयस-
हस्राणां दाहदोषमवाप्नुयात्॥ यदीच्छे
द्दहनं तत्रशिवाग्नौतन्निवेदयेत्। तत्रा-
पि लिङ्गकायस्य दहनन्तु विवर्जयेदि-
ति॥ पद्मपुराणे "सर्वाश्रमातिरेकेण भ-
वेदत्याश्रमीद्विजः। लिङ्गाङ्गीयदिवा-
मुक्तो दग्धुंनार्हतिकर्मणोति" वायवीय
संहितायां "षडध्वशुद्धिं विधिवत्प्राप्तो-
वाम्रियतेयदि पशूनामिवतस्येहनकुर्या
दौर्ध्वदैहिकमिति,,। शिवधर्मशास्त्रे:,,
यः प्राणलिङ्गसँल्लग्नो लिङ्गप्राणीवियु-

ज्यते। शरीरदहनात्तस्य नरकेकालम-
क्षयम् ॥ भस्मोद्धूलितसर्वाङ्गमापादत-
लमस्तकम्। रोमरोमभवेल्लिङ्गंतद्देहं-
दाहवर्जितम् ॥ योगाग्निप्लुष्टकायस्य
त्वात्मलिङ्गेष्टलिङ्गयोः। संयोगान्मोक्ष-
कालेतुमुमुक्षोस्स्यातनूश्शिवा ॥ यदंग-
न्तुमृतंदृष्टंनिक्षिपेतत्तु लिंगनः। तद्देह-
दहनाद्घोरं रौरवं नरकंव्रजेत् ॥ प्राण-
लिङ्गवतांपुंसांलिङ्गप्राणवतान्तनोः ।
प्राप्तेमरणकालेतुनकुर्याद्दहनं बुधः ॥
अज्ञानाद्दाहनं कृत्वा नरकं वाधिगच्छ-
तीति ॥ वीरागमे । "कोटिशैवालयं
दग्धंशिवभक्तं दहेद्यदि। दहन्नज्ञान-
योगेन ब्रह्महत्यामवाप्नुयात् ॥ लिङ्गदे-
हिशरीरस्य लिङ्गसंस्कारवर्जितः। कु-
र्याच्चेद्वह्निसंस्कारमुभयोर्नरकेक्षयः ॥
यःप्राणलिङ्गनिक्षिप्तोनिक्षिपेत्तन्तुलि-

ङ्गिनं। तद्देहदहनाद्घोरं रौरवं नरकं
व्रजेत्,, इति। शिवरहस्य खण्डे। रुद्ररू-
पःशिवज्ञानी सर्वाङ्गेलिङ्गसङ्गिनः। कर्म-
मन्त्रेण दहनान्नरकः कालामक्षयम्।
लिङ्गंभूतिंचरुद्राक्षं येदेहे धारयन्तिच।
सर्वाङ्गलिङ्गसंयुक्तं तद्देहं शिवमुच्यते॥
तद्देहं दहतेकर्मीनरकः कालमक्षयमि-
ति॥ एवं च "यावज्जीवमग्निहोत्रं जुहु-
यात्। अहरहस्संध्यामुपासीत,, स्नानं-
सन्ध्याजपोहोमःस्वाध्यायः पितृतर्पणं।
आतिथ्यं वैश्वदेवं च सत्कर्माणिदिने-
दिने॥दद्याद हरहःश्राद्धं पितृभ्यः प्रीति
माहरन्नित्यादिवाक्यविहिताकरणे प्र-
त्यवायजनकयावज्जीवकर्तव्य नित्यनै-
मित्तिकादिसकलकर्माणि परित्यज्य
"अश्वालम्भंगवालम्भं सन्यासंपलपैतृ-
कं। देवरेणसुतोत्पत्तिं कलौपञ्चविव-

र्जयेदिति,, वैधनिषेधसत्वेपिलिङ्गधा-
रणारहितब्राह्मणानां यागगङ्गास्नाना-
न्नदानादितत्तत्सत्कर्मानुष्ठानानन्तरं
गार्हस्थ्यं परित्य यत्याश्रमस्वीकारे
गृहस्थाश्रमकृततत्तत्सत्कर्मजनितापूर्वं
तदात्मनिवर्तते नवा आद्ये। आशुत-
रविनाशिनोयगादेः कालान्तरभावि-
स्वर्गजनकत्वान्यथानुपपत्या कल्पिता-
पूर्वस्य कर्माधीनलोकप्राप्तिहेतुत्वेन
सन्यस्तानामपितदङ्गीकारे सायुज्यमु-
क्त्यर्थं सन्यास इति सिद्धान्तवक्यानुप
पत्तिः। नच निष्कामनाकृतकर्मानुष्ठा-
नस्य मुक्तिप्रयोजकत्वेन स्वर्गकामोय-
जेदित्यत्र स्वर्गपदस्य "यन्नदुःखेन संभि
न्नंनच ग्रस्तमनन्तरं। अभिलाषोप-
नीतं यत्तत्सुखं स्वःपदा स्पदमित्यादि
वाक्यबोधितस्वः पदवाच्यमित्यसुख-

स्वरूपमोक्षवाचकत्वेन यत्यात्मनि गा-
र्हस्थ्यकृतकर्मजनितापूर्वसत्त्वेपि न मु
क्तिहानिरितिवाच्यं। तर्हिनिष्कामनो
कृतकर्मानुष्ठानेनैव मोक्षसिद्धौ याव-
ज्जीवकर्तव्यतत्तत्कर्मत्यागपूर्वकमाश्र
मस्वीकारेप्रयोजनाभावात्। नच "ना-
न्यत्रकर्मसन्त्यागान्मोक्षं विन्दन्तिमा-
नवाः। नकर्मणा नप्रजया धनेनत्यागे
नैकेअमृतत्वमानशुरित्यादिनाकर्मसं-
त्यागेनैवमोक्षप्रदर्शनेन यत्याश्रमस्वी-
कारो आवश्यएवेति वाच्यं तादृशवा-
क्यानां "तमेव विदित्वातिमृत्युमेति
नान्यः पन्था विद्यतेऽयनाय" तरति
शोकमात्मवित्"। ज्ञानादेवतुकैवल्य
मित्याद्यनुरोधेनज्ञानस्य साक्षाद्धेतुत्व-
बोधनात्तद्द्वाराकर्मणां मुक्तिहेतुत्वं न-
साक्षादित्यत्र तात्पर्यम् नतु ज्ञानद्वा-

रातद्धेतुत्त्वं नास्तीत्यत्रेति अन्यथा
"नित्यनैमित्तिकैरेव कुर्वाणोदुरितक्ष-
यं। ज्ञानं च विमलीकुर्वन्नभ्यासेन च
पाचयेदिति॥ अभ्यासात्तस्य विज्ञानं
कैवल्यं लभतेनरः। धर्मात्सुखंच ज्ञानं
चज्ञानान्मोक्षोधिगम्यते॥ कर्मणैवहि
संसिद्धिमास्थिता जनकादयः। न्या-
यार्जितधनोविद्वांस्तत्वनिष्ठोऽतिथि-
प्रियः॥ श्राद्धकृत्सत्यवादीच गृहस्थो-
पि विमुच्यते। काश्यान्तु मरणान्मु-
क्तिरित्यादिवाक्यविरोधापत्तेः। ता-
दृशवाक्यानां ज्ञानद्वाराकर्मणां मुक्ति-
जनकत्वबोधकत्वात्। द्वितीयेतत्त-
त्कर्मजनितापूर्वस्य फलोदयपर्यन्ताव-
स्थायित्वप्रतिपादकसिद्धान्तव्याघाता-
पत्तेः। किं च वशिष्ठविश्वामित्रादीनां

नित्यनैमित्तिकादिसकलकर्मानुष्ठान-
व्यग्राणामेव जीवन्मुक्तिदशापन्नत्वेन
मुक्त्यर्थं सन्यासाश्रयणायोगाच्चेत्या-
दियौक्तिकबाधसत्वेपि तत्त्वस्य श्रवणं
कुर्यात् । "वेदान्तविज्ञानसुनिश्चिता-
र्था स्सन्यासयोगाद्यतयश्शुद्धसत्वाः'
इत्यादिवाक्यानुरोधेन शङ्कराचार्यैः
कलिसन्धौशपथशतसाधितत्वेनचतु-
र्थाश्रमोऽङ्गीक्रियते । यथा च ब्राह्म-
णमात्रस्य पितृमेधादिपठितानेकमंत्रै
र्दहनविधानेपि "स्नात्वा गृहस्थश्शु-
द्धात्मायतेस्संस्कारमाचरेत् । शिष्यै-
श्च चिरमालोक्य गन्धपुष्पैरलंकृतं ॥
नृत्यगीतादिकैश्चापि कुंकुमाद्यैः कु-
शोदकैः । पोषितं जयशब्देन दुन्दुभि-
ध्वनिनातदा ॥ दिशंप्राचीमुदीचींवा

गत्वातत्रखनेद्बुधः । विशुद्धेतु क्षिते-र्गर्ते शरीरं निक्षिपेद्यतेः इत्याङ्गिरसो-क्तप्रकारानुरोधेन "यतीनां मरणे प्राप्ते-स्पृष्ट्यादिर्नैवविद्यते । आशौचबुध्या-स्नातश्चेद्भिक्षुयात्रां व्रजेन्नरः ॥ ज्ञाति-पुत्रकलत्राणां परिव्राड्मरणं यदि । अशौचं नास्तितेषां वै स्नानमप्याचरेन्न तु ॥ मृतौ न दहनं कार्यम् परहंसस्य सर्वदा । कर्तव्यं खननंतस्य नाशौचं नोदकक्रिया ॥ अन्येषामपि भिक्षूणां खननं पूर्वमाचरेदित्यादिमनुस्मृति-सूतसंहितावचनानुरोधेन च तेषां खननादिकमप्यङ्गीक्रियते । तथैवच महापाशुपतानां लिङ्गाङ्गसामरस्यज्ञा-नवतां लिङ्गधारिणा मप्यवसाने खनन-स्यानेकश्रुतिस्मृतिपुराणादिविहित-

त्वेन पितृत्वादिप्राप्तिद्वाराभाव्युपयो-
गिदहनस्य प्रेतकृत्यस्य प्रागुक्तरीत्या
तेषामनपेक्षितत्वेन च भूतोपयोगि
खननक्रियैवकर्तव्येतियुक्तमुत्पश्यामः।
इयांस्तुविशेषः। मार्गशैवानां (पूर्वशै-
वानां) यावज्जीवपर्यन्तनित्यनैमित्ति-
कादिसकलकर्मानुष्ठानमाचरतामे-
वावसानप्राप्तावाहिताग्निश्चेन्मरणा-
व्यवहितपूर्वकालएव प्राजापत्येष्ट्याग्नी-
नामात्मारोपणं विधाय खननं क्रियते।
अनाहिताग्नीश्चेच्छैवतंत्रोक्तरीत्यातत्
क्रियते अलिङ्गिब्राह्मणानान्तुकेषां चि-
द्या वज्जीवकर्तव्याकरणप्रत्यवायजन-
कनित्यनैमित्तिकादिसकलकर्मानुष्ठा-
नपरिहारपूर्वकमाश्रमान्तरः स्वीकार
इति। अतएव महापाशुपताना-
माचार्यकृपाकटाक्षलब्धवेधादिदीक्षा

पादितसर्वाङ्गलिङ्गसाहित्यनिरस्त
प्राकृततनुसम्बन्ध्याणवादिमलानां
लिङ्गाङ्गस्थलतत्त्वैक्यानुसन्धानवतां का
लपरिपाकाद्देहावसानेन सापिण्ड्या-
दिकमकर्तव्यमेव प्रेतकृत्यत्वात्।
इदंहिसापिण्ड्यकरणे प्रयोजनं।
पित्रादीनां देहत्यागे प्रेतत्वनिवृत्तिं
विनातेषां पितृलोकप्राप्त्यभावेन तद्वा
रामुक्त्यभावेन च तन्निवृत्त्यर्थं "चतु-
र्थस्यनिवृत्त्यर्थं प्रेतत्वस्य निवृत्तितः।
पिण्डसंयोजनादूर्ध्वं चतुर्थोविनिवर्तते"
इति वचनानुरोधेन द्वादशेऽहनिदी-
र्घप्रेतपिण्डं त्रेधाविभज्य क्लृप्तदेवतात्व
वति पितामहादिपिण्डत्रयेण संयो
जने प्रेतोदकस्य तदुदकेनसहसंयोज-
नेन च प्रेतत्वनिवृत्तिर्भवति। तस्यच

वृद्धप्रपितामहस्थाने प्रवेशात्तन्निवृत्ति-
रपीति ।

इतःपरम् । संक्षेपेण ग्रन्थकारस्याशयः प्रदर्श्यतेऽन्त्यकृत्यविषयेपितृमेधसम्बन्धिश्रुतिस्मृतीनां तदितरशैवागमादिवाक्यानाञ्चजातिभेदेन व्यवस्था न शक्यतेकर्तुम् विनिगमनाविरहेण वैपरीत्यस्यापि शङ्कनीयत्वात् १ खननेलिङ्गटितविधिर्नदृश्यतइति न शङ्कनीयम् । स्मृत्यादिनानुमेयत्वात् २ सदानन्दोपनिषदादौविधिरप्यस्ति ३ शिवधर्म्मशास्त्रवचनेषुलिङ्गाङ्गसङ्गियोगिनां खननातिरिक्तकल्पानुष्टानेमहान् दोषोप्युक्तोस्ति ४ शरीरारम्भकाणां पञ्चानां भूतानां मध्येभूमेः प्राथम्यम् प्राधान्यमस्तीति तत्रैव भूतान्तरापेक्षयायोजनमुचितम् । "मा-हिंस्यात्सर्वाभूतानि । "अग्नीषोमीयं पशुमालभेतेति-वाक्ययोरिवसामान्यविशेषभावः प्रकृते एकस्मिन् वाक्येलिङ्गाङ्गसङ्गिपदयोगाद्बोद्धव्यः ६ यतिविषयकत्वमपि न सम्भवति यति पदाभावात् । कश्यपात्रिभरद्वाजगौतमाद्यामहर्षय इत्यादिना लिङ्गपुराणे कश्यपादिमहर्षीणां लिङ्गाङ्गसङ्गित्वमुक्तम् । शिवपुराणे वायवीयसंहितायां कश्यपादीनामाहिताग्नित्वमुक्तं तत्र का प्रक्रियाऽश्रयितव्येतिवि-

चारस्तु न कर्तव्यः तेषामृषीणां कल्पान्तस्थायित्वेन तद्विचारेफलाभावात् इतः परमपिसंभाविताना-माशङ्कानां निराकरणेन खननपक्षः शिवलिङ्गाङ्गिषुस्थापितः शिवलिङ्गाङ्गसङ्गिषु दहनकृत्यन्निरस्य शिवसायुज्यप्राप्तवतां तेषां प्रेतत्वाभावाभिप्रायेण प्रेतत्वनिवृत्तिभूतसापिण्ड्यादिकमपि न कर्तव्यमित्युपपादयत्यग्रिमग्रन्थेन । अत्रैवपूर्वतन्त्रस्यदशमाध्यायस्थं कृष्णलेष्ववघातबाधाधिकरणमुपष्टम्भकतयोपन्यस्यति ।

एवं सतिपूर्वतन्त्रे „तस्मा एतां प्रजापत्यां शतकृष्णालां निर्वपेत्„ । प्रजापत्यां प्रजापतिदेवताकां शतकृष्णालां सुवर्णशकलां महीमेतां चरुं निर्वपतीत्यत्रदर्शपूर्णमास प्रकृतिकेष्टिविशेषे पुरोडाशविशेषोपयोगि सुवर्णशकलेष्ववव हननं कर्तव्यन्नवेति विषयेदर्शपूर्णमासिकेषु व्रीहिषु व्रीहीनवहन्तीत्यनेनावहननस्य प्राप्तत्वेन „प्रकृतिवद्विकृतिः कर्तव्येति„ चोदकव-

शात्सुवर्णशकलेष्ववहननं कर्तव्यमेवेति पूर्वपक्षे । अवहननस्य तुषनिवृत्ति द्वारातण्डुलनिष्पत्त्युपयोगित्वेन व्रीहिषुतुषनिवृत्त्यर्थमवहननप्रसक्तावपिसुवर्णशकलेषु द्वारभावेन नावहननप्रसक्तिरिति सिंद्धांतितत्वेन प्रकृते परशिवैक्यप्राप्तिमतां महापाशुपतानां लिङ्गधारिब्राह्मणानां „काश्यामृतानां सर्वेषां यतीनां लिङ्गधारिणां। देवत्वमेव भवति प्रेतत्वं नैव विद्यते ॥ इति स्कान्दपुराणोक्त्या प्राकृतजनवत्प्रेतत्वाभावेन प्रसक्तं हि प्रतिषिध्यत इति न्यायेन प्रत्यवायाभावे तन्निवर्तकप्रायश्चित्तकरणे प्रयोजनाभावात्तत्प्रेतत्वनिवर्तकसापिण्ड्यादिकरणे प्रयोजनाभाव एव ।

एवं सतीति विकृतिप्रकरणे एवं श्रूयते "तस्मादेतां प्राजापत्यांशतकृष्णलां निर्वपेदिति"। अत्र सुवर्णमयस्तण्डुलः कृष्णलपदेनोच्यतेसुवर्णमयश्चरुरस्यामिष्टौ विधीयते अस्या इष्टेर्दर्शपूर्णमासविकृतितया प्रकृतिवद्विकृतिः कर्तव्येति चोदकवाक्येन दर्शपूर्णमासेति कर्तव्यताया अतिदेशात्। व्रीहीनवहन्तीति वाक्यविहितस्यावघातस्य कृष्णलेपि प्रसक्तावप्यवघातस्य तुषविमोकफलकतया सुवर्णशलाकात्मककृष्णलेषु तुषाभावेन प्रयोजनाभावादवघातो बाध्यते। तद्वदिहापि शिवसायुज्यवतां लिङ्गाङ्गसङ्गिनां प्रेतत्वाभावेन प्रयोजनाभावात् सापिण्ड्यादिकन्नास्तीति भावः। अत एव स्कन्दपुराणे "काश्यां मृतानां सर्वेषां यतीनां लिङ्गधारिणां देवत्वमेव भवति पितृत्वन्नैवविद्यते" इति पठ्यते।

ननु लिङ्गाङ्गिब्राह्मणानां देहावसाने प्रेतत्वाभावेप्य विद्याकल्पितजीवभावसद्भावेन तन्निवृत्तिं विना मृतपुरुषस्येश्वरसदाशिवपरमशिवस्वरूपतत्पितृपितामहप्रपितामहैस्सहैक्यासम्भवेन वर्गत्रयप्रवेशाभावात्तत्पुत्रस्य वृद्धप्र-

पितामहनिवृत्त्यभावेन वर्गत्रयोद्दे-
श्यकमासिकादिश्राद्धकरणप्रवृत्तिर्न-
स्यादितिचेदाकर्ण्यतां सावधानेन ।

वृद्धप्रपितामहनिवृत्त्यभावेनेति । अयमत्राशयः प्रतिभाति मृतपुरुषस्य प्रेतत्वजीवभावोभयनिवृत्ताव पीश्वरसदाशिपरमशिवस्वरूपतत्पितृपितामहप्रपितामहैस्सहैक्यप्राप्तौ क्रियाकर्त्तुः पुत्रस्य पितरमादाय पितृत्रयत्वोपपत्तौ वृद्धप्रपितामहस्तस्माद् वर्गात्पृथग्भवति ततः प्रभृति च सजीवन् पुरुषः स्वपितृपितामह प्रपितामहानामेव श्राद्धं करोति वृद्धप्रपितामहं तद्वले न प्रवेशयति तस्यमृतस्य जीवभावानिवृत्तौत्वीश्वरसदाशिव परमशिवात्मक पुरुषत्रयैक्यासम्भवेन वृद्धप्रपितामहस्य तस्मात्पृग् भावाभावेन जीवत्पुरुषस्य स्वपितृपितामहप्रपितामहोद्देशेन श्राद्धप्रवृत्तिर्नस्यात् तादृशवर्गस्यैवासिद्धेरिति समाधत्ते।

"चतुर्थस्य निवृत्यर्थं जीवभावनिवृत्तितः। तत्त्वादियोजनादूर्ध्वं चतुर्थोपि निवर्तत" इति मकुटागमोक्तप्रकारेणोभयनिवृत्तिः। तथा हि। त-

त्त्वादियोजनादूर्ध्वमित्यत्र तत्त्वशब्देन षट् त्रिंशतत्त्वानाम् आदिशब्देन अष्ट-त्रिंशत्कलानां च ग्रहणं भवति। तथा च मृतपुरुषस्यैकादशेऽहन्येकोऽद्दिशेन षो-डशादिकं निर्वर्त्य द्वादशेऽहनि संप्राप्ते मृतपुरुषमेकस्मिन्नावाह्य तत्पितृपिता-महप्रपितामहानीश्वरसदाशिवपरशि-वस्वरूपां स्त्रित्त्वसंख्यातमाहेश्वरेष्वा-वाह्य च शिवमहेश्वर सदाशिव पर-शिवस्वरूपपितृपितामहप्रपितामह-वृद्धप्रपितामहाधिष्टितषट्त्रिंशतत्त्वा-न्यष्टत्रिंशत्कलाश्च तत्समसंख्याक मा-हेश्वरे ष्वभावपक्षे केषु चिद्वा ओं हां पार्थिव तत्त्वमावाहयामि। ओं हां ज-लतत्त्वमावाहयामि। ओं हां तेजस्तत्त्व-मावाह यामि। ओं हां वायुतत्त्वमावा-हयामी त्यादिना पृथीवीतत्त्वमारभ्य

शिवतत्त्वपर्यन्तम् ईशानस्सर्वविद्यानां शशिनीमावाहयामि । ईश्वर स्सर्वभूताना मङ्गदामावाहयामि । ब्रह्माधिपति र्ब्रह्मणोधिपति र्ब्रह्माधिष्ठामावाहयामि । ब्रह्माशिवोमेऽस्तुमरीचिमावाहयामि । सदाशिवो ज्वलिनीमावाहयामीत्यादिना शशिनीकलामारभ्य स्थित्याख्य कलापर्यन्तं साक्षतबिल्वदलैरावाहयेत् । ततश्च तत्त्वकलास्वरूपमाहेश्वराणांब्राह्मणानां विष्टरप्रदानादिपूर्वकं पादार्चनादिकं कृत्वामेपितुः सर्वजीवभावनिवृत्तिद्वाराशिवमहेश्वरसदाशिवस्वरूपपितृपितामह प्रपितामहैक्यप्राप्त्यर्थं साक्षतबिल्वदलैस्तत्त्वकलासंयोजनं करिष्य इति संकल्पं कुर्यात् । अथ च । ओं हां पार्थिवतत्त्वं संयोजयामि ।

ओं हां जलतत्त्वं संयोजयामि । ओं हां तेजस्तत्त्वं संयोजयामि । ओं हां वायुतत्त्वं संयोजयामि ओं हां आकाशतत्त्वं संयोजयामीत्यादिना शिवतत्त्वपर्यन्तं षट्त्रिंशतत्त्वानां । ईशानस्सर्वविद्यानां शशिनीकलां संयोजयामि । ईश्वरस्सर्वभूतानां अङ्गदां संयोजयामि । ब्रह्माधिपति र्ब्रह्मणोधिपति र्ब्रह्माधिष्ठां संयोजयामि । शिवोमेअस्तुमरीचिं संयोजयामि । सदाशिवों ज्वालिनीं संयोजयामीत्यादिना पञ्चब्रह्ममंत्रैश्शशिनीकलामारभ्यस्थितिकलापर्यन्तमष्टत्रिंशत्कलानां च संयोजने कृते मृतपुरुषस्य जीवभावनिवृत्तिद्वारा शिवमहेश्वरसदाशिवस्वरूपतांत्पितृ पिता महप्रपितामहैको यजमानस्य वृद्धप्रपितामह

निवृत्या वर्गत्रयोद्देश्यकमासिकादिश्रा
द्धकरणप्रवृत्तिसिद्धिर्भवतीति ।

अथमार्गशैवानां गुरुकृपालब्ध-
दीक्षासमये क्रियादीक्षान्तर्गतस्वस्ति-
कारोहणाख्यदीक्षया शिष्यजननीग-
र्भजातमांसपिण्डनिवृत्यर्थमापादम-
स्तकपर्यन्तं संहारक्रमेण षडध्वन्यासा-
नन्तरं मन्त्रपिण्डोत्पत्यर्थं पुनरुत्पत्ति-
क्रमेण षडध्वन्यासकरणात्तत्कृततत्त्व-
कलासंयोजनादिना शिवैक्यकरणनि-
मित्ताभाव इति चेन्नैवं । प्राग्दीक्षि-
तस्यापि भक्तस्य भावनामात्रपिण्ड-
सम्बन्धेपि तस्य तावदेवचिरं "या-
वन्नमोक्ष्ये अथ संपत्स्ये" । इत्या-
दूश्रुतिबोधितजीवन्मुक्तिदशापन्नस्येव
पद्मपत्राम्भस्सम्बन्धवदाविद्यकपाञ्च
भौतिकदेहसम्बन्धस्यापि सत्त्वे तद्धा-

रणप्रयोजकक्षुत्पिपासादिप्रसक्त्या रागद्वेषादिसम्भवेन च नित्यनैमित्तिकादिसकलकर्मानुष्ठानप्रयोजकब्राह्मणत्वाद्यभिमानावश्यंभावेन च जीवभावनिवृत्तेः । क्रियादीक्षापरिप्राप्तस्यापि पार्थिवरूपाभिभूतसुवर्णरूपस्येव प्राकृतिकजीवभावाभिभूतत्वेनाव्यक्ततयादेहावसानानन्तरं शिवमहेश्वरसदाशिव परशिव स्वरूपतत्पितृपितामह प्रपितामह वृद्धप्रपितामहाधिष्ठिततत्त्वकलासंयोजनेनैक्यफल काविद्यकजीवभावादिनिवृत्तौ । परमकैवल्यापरनामक परमशिवैक्याभिव्यक्तिसिद्धेरिति । न च मांसपिण्डस्य दीक्षाकाल एव निवृत्तिरिति वाच्यम् । मन्त्रपिण्डोत्पत्तेरिव तन्निवृत्तेरपि भावनामात्रगम्यत्वात् ।

परन्तु वशिष्ठविश्वामित्रदुर्वासादि-जीवन्मुक्तानामिव मार्गशैवानां पाञ्च-भौतिकदेहसम्बन्धः पद्म पत्राम्भस्सदृश एवनतु प्राकृतजनशरीरसम्बन्ध सदृश इति सुधीभिर्विमर्शनीयम् मदुक्तार्था-पपादकानितुवचनानि मकुटचन्द्रज्ञान वीरागमाद्यन्तर्गत पैतृक प्रकरणपठि-तान्यनुसन्धेयानि कानि चिदुदाह्रि-यन्ते ।

चतुर्थस्य निवृत्त्यर्थं जीवभावनिवृत्तितः तत्त्वा-दियोजनादूर्ध्वं चतुर्थापिनिवर्तत्तइति ॥ अयमर्थः षट्त्रिंशत्तत्वानामष्टत्रिंशत्कलानां वक्ष्यमाणप्रकारे-णयोजनोत्तरं जीवभावनिवृत्तौसत्यांचतुर्थावृद्धप्रपि-तामहोपिनिवर्तते तस्माद्वर्गात् पृथग्भवति एतत्प्रकर-णार्थस्य वास्तविकन्तत्वं मुकुटागमदर्शनेनैव निर्द्धारयि तुं शक्यतइत्युपरम्यतेऽधिकलेखात् त्रित्वसंख्यातमाहे-श्वरेषु ईश्वरसदाशिवपरमशिवतादात्म्येन कल्पि-तेषु त्रिषुवीरशैवब्राह्मणेष्वित्यर्थः । केषुचिद्वेति श्राद्धकालेवीरशैवानामलाभपक्षे सामान्यशैवेष्वित्यर्थः ।

जीवभावनिवृत्तिद्वारेति । अत्रमाहेश्वरब्राह्मणेषु प्रदर्शितमन्त्रैःपृथिव्यादितत्त्वानांशशिन्यादिकलानाञ्चा वाहनं कृत्वातत्संनिधिस्थापितावाहितमृतपुरुषकेशैवपुरूषे तत्त्वानामुक्तकलानाञ्चपुनः प्रदर्शितैः संयोजयामीत्यन्तमन्त्रैः संयोजने कृते जीवभावनिवृत्तिपूर्वकपितृत्वप्राप्तिः वृद्धप्रपितामहस्य तद्वर्गात्पृथग्भावश्चभवतीति शैवागमप्रक्रिया यावदेतत्त्वावगमस्तुकामिकागमवातुलागममकुटागमानां सम्यगवलेःकनेनैवभविष्यतीति तत एव करणीयः । अथमार्गशैवानामिति । तेषां गुरुकृपालब्धदीक्षावत्त्वेन स्वत एवशिवैक्यप्राप्ततया क्रियादीक्षान्तर्गतस्वस्तिकारोहणाख्यदीक्षयाजननीगर्भदोषनिवृत्त्यर्थं संहारोपपत्तिकर्म्मभ्यां षडध्वन्यास तत्त्वकलादियोजनानांनिमित्ताभावात् नास्त्यपेक्षेतिनमन्तव्यं तस्य जीवन्मुक्तदशापन्नत्वेपि पद्मपत्राम्भस्सम्बन्धवत् यथा कथञ्चिद्देहसम्बन्धस्यावश्यं सद्भावेन तत्प्रयुक्तक्षुत्पिपासादेश्चसत्वेनशिवमहेश्वरसदाशिवपरशिवनिष्ठतत्त्वकलादियोजनाया जीवभावनिवृत्त्यर्थं शिवैक्यप्राप्त्यर्थञ्चावश्यकत्वादिति विमर्शनीयेत्यन्तग्रन्थाशयः एतदन्तर्गतायां वशिष्टविश्वामित्रेत्यादिपंक्तौवशिष्ठादीनां नित्यसिद्धत्वेन कस्यापि कर्म्मणोऽपेक्षानास्तीति सूच्यिते स्वकृतसिद्धान्ते आगमवाक्यानिप्रमाणत्वेनोपन्यस्यति "गुरुदीक्षापरिप्राप्तशिवलिङ्गाङ्गयोगतइत्यादिना ।

मकुटागमे "गुरुदीक्षापरिप्राप्तशिवलिङ्गाङ्गयोगतः । द्विरेफकीट न्यायेन शिवैक्यं प्राप्तवान् द्विजः ॥ लिङ्गाङ्गसङ्गिनि मृते सम्प्राप्ते द्वादशेऽहनि । सापिण्ड्यं नैव कर्तव्यम् प्रेतत्त्वाभावतोमुने ॥ दीक्षाकालपरिप्राप्तशिवैक्यम् जीवभावतः । आविर्भूतमितिप्राहु श्शैवागमविशारदाः ॥ सदाशिवाद्यभिन्नेभ्यः पितृभ्य स्तत्त्वसंमिताः । कलास्संगृह्यचान्यत्रसमभ्यर्च्य यथाविधि । जीवभावनिवृत्त्यर्थं मृतलिङ्गाङ्गसङ्गिनः वर्गत्रयैक्यसिध्यर्थं तत्त्वादीन्योजयेत्सुतः"। चन्द्रज्ञाने। द्वादशेऽहनि सम्प्राप्तामृत लिङ्गाङ्गसङ्गिनः । जीवभावनिवृत्त्यर्थं कुर्यात्तत्त्वादियोजनम् ॥ लिङ्गाङ्गसङ्गिनि मृते सापिण्डादि नकारयेत् । तत्त्वसंयोजनादेव जीव-

भावो निवर्तत इति,, वीरागमे। आत्म-
विद्याशिवाख्यानितत्त्वानिच यथाक्रमं।
त्वंपदञ्चात्मतत्त्वंस्याद्विद्यातत्त्वमसीति
च॥ तत्पदं शिवतत्त्वं स्यादात्मतत्त्वात्मकं
पुनः। पञ्चविंशतिसंख्याकं दशतत्त्वा-
त्मकं तथा॥ विद्यातत्वं शिवाख्यंस्या-
त्तत्त्वमेकमिति स्मृतं। तत्त्वानामधि-
पोज्ञेयो महेशश्च सदाशिवः॥ शिवः
परात्परश्चैव शिवे परमकारणे।
दीक्षात्रयप्रकारेण गुरुणा दीक्षितो
यथा॥ तथैकस्य च भक्तस्य सापिराड्य
किं प्रयोजनं। तस्मात्तत्त्वेश्वरा स्सम्यग-
र्चनीया यथाक्रमं॥ द्वादशेऽहनिसम्प्रा-
प्तेकल्याणे शिवयोगिन इति। अत्रत-
त्त्वेश्वरा इत्यत्र तत्त्वपदं कलानामप्यु-
पलक्षणम्। एवं पिराडतत्त्वकलारू-
पाणां तदधिष्ठानेश्वरादिरूपपितृणां

चार्चनेन तत्त्वादिसंयोजनं कार्यमिति तात्पर्यमुन्नेयं । पद्मपुराणे । दहराकाशलिङ्गस्य सतोयोगादिलिङ्गतः ॥ लिङ्गाभावात्मकतया प्रेतकार्यादिकं नहीति,, ।

शिवैक्यं जीवभावतइति ल्यब्लोपपञ्चम्यर्थे तसिल् जीवभावन्निवर्त्य दीक्षाकाललब्धं शिवैक्यम्प्रादुर्भूतं भवतीत्यर्थः । तत्त्वसंमिताइति । चतुर्विंशति संख्याकाइत्यर्थः "आत्मविद्याशिवाख्यानि तत्वानि च यथा क्रममिति । तत्त्वानां त्रेधाविभागः क्रियते आत्मतत्वं विद्यातत्वं शिवतत्वमिति अत्रतत्त्वमसीति वाक्योत्पन्नविद्याविद्यातत्वमित्युच्यते त्वं पदार्थआत्मतत्वमित्युच्यते तत्पदार्थः शिवतत्वमित्युच्यतेऽत्रात्मतत्त्वंपञ्चविंशतिसंख्याकं विद्यातत्त्वं दशसंख्याकं शिवतत्त्वमेकसंख्याकम् इमान्येव पूर्वोक्तानिषट्त्रिंशत्तत्त्वान्युच्यन्ते एषामवान्तरनामानिग्रन्थान्तरतोऽवसेयानि तथैक्यस्य च भक्तस्येति । ऐक्यस्य शिवैक्यस्य भक्तस्य श्रद्धया आत्मनि तदैक्यंभावयमानस्य । तस्मात्तत्त्वेश्वराः सम्यगर्चनीया इति । तत्त्वेश्वराः इत्यस्य तत्त्वेश्वरसदाशिवतादात्म्येन भावितवीरशैवब्राह्मणाइत्यर्थः । कल्याणेशिवयोगिन इति शिवयोगिनः कल्याणे मोक्षप्राप्युत्सवकालइत्यर्थः यद्वा निमित्तसप्तम्येषा

कल्याणेऽर्थात् कल्याणार्थम् । दहराकाशलिङ्गस्येति हृत्पुण्डरीकान्तर्गतब्रह्मलिङ्गस्य सतः कालत्रयाबाध्यस्य योगादिलिङ्गतः समाधिप्रकारैः लिङ्गभावात्मकतया शिवलिङ्गरूपत्वं प्राप्तया ।

मतान्तराणामपि सापिण्ड्यादिकमनित्यमेव । पित्रादेराश्रमस्वीकारानन्तरभाविमरणप्रसक्तौ । तेषां च प्रागुदाहृतशौनकमन्वादिस्मृतिभिः पिण्डोदकादिनिषेधेन सापिण्ड्यकरणायोगात् । पितुर्गृहस्थत्त्वेपि पितामहादीनां सन्यस्तत्त्वे ब्रह्मीभूततयातदुद्देश्यकपिण्डाभावेन तत्र प्रेतपिण्डसंयोजनासम्भवेन च तत्रापि तदभावात् । परन्तु पितृपितामहादीनां सर्वेषां गृहस्थानामेव यत्र मरणप्रसक्तिस्तत्रैवसापिण्ड्यकरणमित्यनित्यत्वं दुर्वारमेव । यद्यपि "न च श्राद्धादिकं कर्मनपिण्डंनोदकक्रिया । न कुर्यात्पा-

र्वणादीनि शिवलिङ्गाङ्गसङ्गिने । प्र-
त्यब्दन्तुतमुद्दिश्य शिवभक्तां श्चभोज-
येत् ॥ भक्तेभ्योदत्तमन्नं यत्तदेवच शि-
वायहीति,, श्राद्धमात्रनिषेधवचनं ।
तत्तु अत्याश्रमीप्राणलिङ्गसम्बन्धिभ-
स्मघटिकां कंथां कमण्डुलं भिक्षापात्रं
दण्डं च धारयेदिति वचनावगतनि-
त्यनैमित्तकादिकर्मपरिहारपूर्वकत्य-
क्तदारपुत्रादिनिराभारवीरशैवपर-
मित्यवगन्तव्यम् । गृहस्थानां शिवज्ञा
नैकनिष्ठानां लिङ्गाङ्गिनां विशेषवीर-
शैवानां तु प्रेतकृत्यपिण्डाद्ययोगेपि
लिङ्गाङ्गसङ्गिनि मृते निक्षपेदुत्त-
रक्रियां ॥ कुर्वीरन् च्छैवतंत्रोक्तांशिष्य-
पुत्रादयो गृहइति शङ्करसंहितावच-
नानुरोधेन स्वगृह्योक्तप्रकारेण सर्वं-

मप्यवसानकृत्यं कर्तव्यमेवेति सर्वं समञ्जसमिति ॥ इति श्रीमद्वेदवेदान्तस्मृति पुराणागमेतिहाससकलशास्त्रप्रसिद्ध श्रीमद्वीरशैवविशिष्टाद्वैतविद्याचार्य्यपाषण्डाद्रिमहागजपांचरात्रप्रालेयचण्डकिरणाद्वैत कुंभिकुंभदलनरौद्रपञ्चानन श्रीमन्नन्दीश्वर कृतलिङ्गधारणचन्द्रिकायां द्वितीयो भागः। "बसवेश्वरपौत्रेणमहेशाचार्य्यसूनना" नन्दीश्वरेणरचितालिङ्गधारणचन्द्रिका॥

## लिङ्गधारण चन्द्रिका सम्पूर्णा।

अनित्यत्वं दुर्वारमिति। संन्यासाश्रमंगृहीतवतां पित्रादीनां सर्वमत एवसापिण्डयस्याकारणात् एवं मन्यते। निराभारवीरशैवपरमिति अन्यथा तत्त्वकलायोजनाकर्त्तव्यतापरकुटागमवीरागमस्योदाहृत वाक्यविरोधापत्तेः। तस्मान्निर्गत आभारः सांसारिकचिन्तारूपोयस्मात् तादृशोयोवीरशैवस्तत्परमेव आद्धमात्रनिषेधवचनं मन्तव्यम्। तेषां निरतिशयकल्याणरूपशिवनिष्टतया वाह्यक्रियानपेक्षणात्। इति शिवम्।

शिवेति मङ्गलन्नाम यस्य वाचिप्रवर्तते। मङ्ग-
लानिसमग्राणि करस्थान्येव तस्य तु॥ शिवस्वरूपं
देवंतं देवीन्तां सर्वमङ्गलाम्। ध्यात्वाकथञ्चिन्मनसि
प्रणमामिपुनःपुनः॥ श्री क्षेत्रकाशीस्थमहामहोपा-
ध्याय पण्डित श्री शिवकुमारमिश्रविरचित शरन्नाम्नी-
व्याख्यासमाप्ता* प्राप्तेव्योमरसाङ्कचन्द्रगणिते १९६० श्री-
वैक्रमेवत्सरे। "ग्रीष्मर्तौशुचिशुक्लगाष्टमतिथौ वाणी-
शितर्वासरे॥ काशीजङ्गमवाटिकोन्नतमठेसिंहासना-
धिष्ठितः। श्रीराजेश्वरविद्व्यधापयदिमां व्याख्यांशर-
न्नामिकाम्॥ १॥

शक्त्याविशिष्टस्य महेश्वरस्या
द्वैतं प्रपञ्चेसकलेऽस्तियत्तत्।
अचीचकासँस्तुपुराजनेभ्यः
काश्मीरशैवागमतत्त्वविज्ञाः॥ २॥
तदीयसिद्धान्तनिगूढतत्त्वं
लोकोपकारायनिवेदयिष्यन्।
प्राचीनगीर्भिः किलनन्दिकेशः
चकारलिङ्गाश्रयचन्द्रिकान्ताम्॥ ३॥

लग्नादिव्यपदांबुजेभगवतः कारुण्यवारांनिधेः।
श्रीशम्भोः कमलासनप्रभृतिभिः संपूज्यमानेऽनिशम्॥
वाक्यैः प्रीतिसमुद्भवं वितनुतेलोकस्य गौरीश्वरे।
शैवेष्टेष्वपिशङ्कितं विधुवतीत्यास्तेतरामादृता॥ ४॥
अस्याविश्वेशपादाब्जपरत्वं वीक्ष्यहर्षतः।
व्याख्यांशिवकुमारोऽहमकार्षन्तच्छुभास्त्वियम्॥ ५॥

शुभः शंभुः शुभा गौरी शुभः शेषः शुभः शशी ।
शुभो गणपतिस्तस्माद्ग्रन्थोऽयं सर्वतः शुभः ॥ ६ ॥
कर्नाटदेशगाश्वत्थपुरग्रामनिवासभृत् ।
नन्दिकेशमठालम्बकैय्यप्पाख्यात्मजन्मवान् ॥ ७ ॥
साहित्ये तर्कशास्त्रे च वाराणस्यां कृतश्रमः ।
काशीनाथ इति प्रख्यां विभ्रद्व्याख्यामिमां सुधीः ॥ ८ ॥
विलिख्य शोधयित्वा चामुद्रयच्छम्भुतुष्टये ।
प्रेरितः काव्यशास्त्रज्ञैर्भालाद्याह्वयपण्डितैः ॥ ९ ॥

शरन्नाम्नी व्याख्या समाप्ता ॥



श्रीविश्वाराध्यायनमः ।

# श्रीवीरशैवोत्कर्षप्रदीपिका ॥

श्रीमच्छक्तिविशिष्टाद्वैतसिद्धान्तपयः
पारावारराकासुधाकरसुधापुर-
स्थचन्नवृषभेन्द्रस्वामिना चरव-
र्य्यैणलिङ्गयज्ञोपवीतद्वयधा-
रिष्वाराध्यब्राह्मणेषु वी-
रशैवब्राह्मण्यभ्रमनिरा-
सार्थं वीरचिता ।

श्रीकाशीस्थविश्वाराध्यपीठाध्यक्षश्रीराजेश्वर
स्वामिनामाज्ञया काव्यालङ्कार पण्डित-
फालाक्षशास्त्रिणा श्री अब्बीगेरि
ग्रामवासि काशीनाथशास्त्रि-
णा सम्यक् संशोधयित्वा

काश्यां
मेडिकल्हाल्नामकमुद्रालये मुद्रयित्वा प्रकाशिता ।
सन् १९०५ ईसवी ।

( ॐ )

(वीरशैवोत्कर्षप्रदीपिका लिख्यते)

श्री शिवं सच्चिदानन्दलक्षणंसर्वकारणं। महालिङ्गाभिदं नौमि समुपास्यं मुमुक्षुभिः ॥ १ ॥ गुरुमनामादिनिरञ्जनजंगमं परमसद्गुणसौख्यपरायणं । जगतितोंटदसिद्धमहेश्वरंप्रथितनामजुषं प्रणमाम्यहं ॥ २ ॥ लीलामूर्तिरनादिजंगममयः श्रीतोंटसिद्धेश्वरः स्वैरोद्दामकृपाकटाक्षलहरीप्राप्तोपदेशोन्नतिः । धर्मान्साधुसमीरयन् स्वभजकान् श्रीवीरशैवोचितान् बोधं नोविमलं ददातु सुरिगा श्रीशान्तवीरो यतिः॥३॥ शान्तवीरगुरुभूररिसत्कृपापात्रतामुपगतस्समन्ततः । योवसत् क्षितितलेविरक्तिमांस्तन्नमामि गुरुसिद्धदेशिकं ॥ ४ ॥

योगसिद्धगुरुसिद्धदेशिकानुग्रहाधिगत
शैववैभवः । तत्त्वबोधनरतस्सुधापुरे
भातिचन्नबसवप्पदेशिकः ॥ ५ ॥ तादृशं
गुरुमपृच्छदिच्छयापण्डितोमुरगयाख्य
शीलवान् । तत्त्वमुत्तममतन्त्रथाविधं
सन्मतञ्चमम कथ्यतामिति ॥ ६ ॥ इतीर-
यन्तंमुरिगाख्यशीलिनं गुरुस्तवं प्रश्नयु
गोत्तरं क्रमात् । कृतिं वितन्वन्निगमागमा
नुगांवदाम्यहंश्रुणिवतिसोवदन्मुदा ॥७॥
सकलश्रुत्यागमपुराणप्रसिद्धाष्टावरण-
पञ्चाचारविशिष्टतया महालिङ्गैक्यरू
पमोक्षसाधननिरुत्तरैकोत्तरशतस्थल-
गर्भीकृतषट्स्थलप्रतिपादकसिद्धान्त
शास्त्रप्रतिपाद्यज्ञानक्रियापरिभेदेन
रूपपदार्थसमर्पणप्रकारीभूताङ्गलिङ्ग-
शक्तिभक्तिहस्तमन्त्रमुखपदार्थानुस
न्धानाश्रयषड्भेदभिन्नस्थानावयवीभू-

तेष्टलिङ्गप्राणलिङ्गभावलिङ्गपूजोपास-
नैकतानमानसस्तथा च विधिष्टाद्वैत-
ज्ञानसम्पन्नः श्रीवीरशैवस्सर्वोत्तरः ।
तथाहि । शङ्कर संहितायां । "अष्टावर-
णसम्पन्नः पञ्चाचारपरायणः वैदिकं
कर्मकुर्वीतज्ञानैकफलसाधनमिति ।
'योहस्त पीठे निजमिष्टलिङ्गं विन्यस्य
तल्लीनमनः प्रचारः । बाह्य क्रियासंकु-
लनिस्पृहात्मासंपूजयत्यङ्गसवीरशैवः"
क्रिमिकीटपतङ्गेभ्यः पशवः प्रज्ञयाधि-
काः । पशुभ्योपिनराःश्रेष्ठास्तेषुश्रेष्ठा
द्विजातयः।द्विजातिष्वधिकाविप्राःवि-
प्रेषुकृतबुद्धयः। कृतबुद्धिषु कर्तारस्तेभ्य-
स्सन्यासिनोऽधिकाः ॥ तेभ्योविज्ञानि-
नःश्रेष्ठास्तेषु शङ्करपूजकाः । तेषु श्रेष्ठा-
महाभाग ममलिङ्गाङ्ग सङ्गिनः ॥ लि-
ङ्गाङ्गसङ्गिष्वधिकष्षट्स्थलज्ञानवान्-

भवेत् ॥ तस्मादप्यधिकोनास्ति त्रिषु-
लोकेषुसर्वदा ॥ सवंद्यस्सर्वदापूज्यस्सं-
सारविजिगीषुभिः । बहुनोक्तेन किंव-
त्ससएवाहं न संशयः ॥ पारमेश्वरा-
गमे । "विभूतिर्यस्य फालेस्तिकंठे लिङ्गं
मदात्मकं । रुद्राक्षधारणं देहे सोऽहं
देविनसंशयः ॥ इत्यादिप्रमाणबला-
द्वीरशैवानां सर्वोत्तमत्वं सिद्धं ॥ ननु'
"श्रुतिभ्रष्टः श्रुतिप्रोक्त प्रायश्चित्ते भयं-
गतः । क्रमेण श्रुतिसिद्ध्यर्थं मनुष्यस्त-
न्त्रमाश्रयेदिति ॥ श्रुतिपथगलितानां
मानवानांहितन्त्रं श्रुतिपथनिरतानां
तत्सदानैवसेव्यं ।"अत्यन्तस्खलितानां
हिनराणां वेदमार्गतः पाञ्चरात्रादयो-
मार्गाः कालेनैवोपकारकाः ॥ कापालं
पाञ्चरात्रञ्च यामलं वाममर्हतं । एवं
विधानि चान्यानि मोहनार्थानिता-

नितु ॥ विद्धक्ताश्चैवयेके चित्कपालकृ-
तभूषणाः । शैवाः पाशुपताश्चान्ये पाञ्च
रात्रास्तथापरे ॥ तथान्याश्चदुरात्मान
स्सर्वेप्यसुरदैवताः । पाशब्देन त्रयीध-
र्मोजगतः पालनात् स्मृतः । तंखण्ड
यति यस्मात्तेपाषण्डा तेन हेतुना ॥ इ-
त्यादिकौर्मब्रह्मकैवर्तसूतसंहितावा-
शिष्ठ लैङ्गपराशरोपपुराणवचनैः के-
वलतन्त्रमार्गाश्रयणस्य निन्दितत्वात् ।
वीरशैवानुष्ठेयधर्माणां तादृशतन्त्रेष्वे
वविहितत्वेन वैदिकेषु श्रुतिस्मृती
तिहासेष्वप्यदर्शनात् । तादृशधर्मानु-
ष्ठानैकतत्पराणां वीरशैवानांकथङ्का-
रमुत्कर्षः प्रसाध्यत इति चेन्नैवम् ।
"साङ्ख्यं योगःपाञ्चरात्रं वेदःपा-
शुपतं तथा । आत्मप्रमाणान्येतानि
नोह न्तव्यानि हेतुभिः ॥ इत्यानुशास-

निकमहाभारतवचनात्। पुराणान्तरै-
र्निन्दितानां पाञ्चरात्राद्यागमानां ग्रा-
ह्यत्वप्राप्त्या तदुदीरितधर्माणामप्यव-
श्यमनुष्ठेयत्वं सिद्धमेव। न च भारतव-
चनेन पाञ्चरात्रपाशुपतधर्माणामेवा
चरणीयत्वपर्यवसानेपि वीरशैवधर्मा
णां पाशुपतानन्तर्भावात् कथं तद्धर्मा
नुष्ठानपराणामुत्कर्ष इति वाच्यम्।
पाशुपतस्य वैदिकावैदिकभेदेन द्वैवि-
ध्यान्निषेधवचनानामवैदिकपाशुपत-
परत्वेन विधिवचनानां वैदिकपाशुप
तवीरशैव परत्वेन व्यवस्थाया एव अ-
प्पयदीक्षितैः कल्पतरु व्याख्याने परि
मले"पत्युरसामञ्जस्यादित्यधिकरणे-
पाशु पतभेदमुक्त्वा तत्र लगुडीशपाशु-
पतस्य ग्राह्यत्वमभ्युधायि तस्माद्वीर
शैवधर्माणान्तान्त्रिकत्वं निषेध्यताव-

च्छेदकन्नभवति । ननुलगुडीशपाशुप-
तस्याप्यप्पयदीक्षितैः कृतेपरिमलेवै-
दिकत्वेन ग्राह्यत्वप्रतिपादनेपि वीरशै-
वधर्मप्रतिपादकागमानां लगुडीशपा-
शुपतान्तर्भावभिन्नत्वात् तेषामवैदिक-
त्वेन ग्राह्यत्वं पर्यवसितमिति चेन्न ॥

सिद्धान्तशिखामणौ । "वेदसि-
द्धान्तयोरैक्यमेकार्थप्रतिपादनात् । प्रा-
माण्यं सदृशं ज्ञेयं पण्डितैरेतयोः सदा"।
क्रियासारे "अथवाशिवनिश्वासश्रु-
तिभ्यस्तेशिवागमाः । अधिकाः शिवव-
क्त्रेभ्य स्साक्षादेवविनिर्गताः ॥ परस्प-
राविरुद्धार्था शिवोक्ता निगमागमाः।
अल्पबुद्धिभिरन्योन्यविरोधः परि क-
ल्प्यते॥ निगमानामागमानां परमाप्तो-
पदेशतः'॥ प्रामाण्यमविशेषेण ज्ञातव्यं
तत्त्वदर्शिभिः। इति वचनैर्वेदाविरुद्ध-

वर्णाश्रमधर्मप्रतिपादकत्वेन सर्वाश्र-
परमेश्वरैककर्तृत्वेन प्रामाण्यस्य शिष्टै-
रभ्युपगन्तव्यत्वात् । तदागमोक्ताचा
राणां सर्वेषां वैदिकानुष्ठेयत्वं सि-
द्धम् । अन्यथा शिवादिदेवतालय-
निर्माणशिवलिङ्गादिप्रतिष्ठारथोत्स-
वादिविधिमन्त्रोद्धारमन्त्रदोषमन्त्रसं-
स्कारमन्त्रन्यासमुद्राविधानादिषु के-
वलशिवागममूलेषु वैदिकानां प्रवृत्ति-
र्नस्यात् "कूर्मसूत संहितायां" शिवम-
हात्म्यखण्डे" "व्यासवचनविस्रम्भणी-
यत्वप्रस्तावे""अष्टादशपुराणानां कर्ता
सत्यवतीसुतः । कामिकादिप्रभेदानां
यथादेवो महेश्वरइति॥ तद्व्याख्याने
विद्यारण्यश्रीपादैर्व्यासवचनेषु विश्वा
सोत्पादनार्थमष्टादशेत्युपक्रम्यकामि-
कादीनां शैवागमानां शिवोक्त-

तथा प्रामाण्यं यथातथानारायणाव
तारव्यासप्रणीतानामष्टादशपुरा-
णानां प्रामाण्यमिति प्रतिपादितम् त-
स्मात्तदागमोक्तानां वीरशैवधर्माणा-
मनुष्ठेयत्वं सिद्धम्। तथा च। तदाग-
मेषु। अनादिशैवमादिशैवं महाशैव-
मनुशैवमवान्तरशैवं प्रवरशैवमन्त्यशै-
वमिति भेदेन सप्तविधानां शैवा-
नांमध्ये आचारभेदभिन्नानां सामा-
न्यशैवमिश्रशैव शुद्धशैव वीरशैवरूप-
तयाचतुर्विधानां मध्ये। वीरशैव-
स्याचारभेदेन सामान्यवीरशैव विशे-
षवीरशैवनिराभारवीरशैव भेदेन त्रि-
विधानां तदनुष्ठेयभस्मरुद्राक्षधार-
णपञ्चाक्षरीजपलिङ्गधारणगुरुलिङ्गज-
ङ्गमपूजातत्पादोदकप्रसादस्वीकाररू-
पासाधारणवीरशैवधर्माणां कालाग्नि

रुद्रभस्मजाबालचिदम्बरवेदान्तसारा द्युपनिषत्सु लिङ्गधारणादिप्रतिपादकेषु बृहत्तैत्तिरीयादिमन्त्रेषु शङ्करसंहिता सूतसंहिता शिवरहस्य लिङ्ग पुराणादिषु कामिकादिवातुलान्तेषु चाष्टाविंशतिशैवागमेषु प्रतिपादिताराध्यगणाब्दितवीरशैवेषु च सत्वाद्वैदिकत्वं सिद्धम् ॥ अन्यथावैदिकत्वेनाभिमतानां ब्राह्मणानां रथोत्सवप्रतिष्ठादितान्त्रिकधर्मानुष्ठानवतां वैदिकत्वन्नस्यात् तथा च तत्समानन्यायतयोक्तवैदिकत्वन्निर पायम् । ननु वीरशैव धर्मप्रतिपादक श्रुत्यागमानामाचारभेदेन सामान्यविशेषनिराभारसमाख्यावतां भक्तमाहेस्वरप्रसादिप्राणलिङ्गिशरणैक्यस्थलानाम् आचारलिङ्गगुरुलिङ्गशिवलिङ्ग जङ्गमलिङ्ग

प्रसादलिङ्गमहालिङ्गाभिधानानां लि-
ङ्गस्थलानां पुर्वोक्तानामङ्गस्थलाना-
ञ्चोत्तरोत्तरधर्माचरणस्य पूर्वधर्माच-
रणान्तरभावितया क्रमिकत्वेन ता-
दृशधर्माचरणस्य कालहस्तिश्रीशैला-
दिदेशस्थितयज्ञोपवीतधारणलिङ्ग-
धारणादिवैदिकतान्त्रिकधर्मसमुच्च-
याऽनुष्ठानपराराध्यविहितत्वेन नेतुं
शक्यत्वात् कथमाराध्येतरकेवलवीर-
शैवविषयत्वमिति चेन्न ।" अत्या श्र-
मिभ्यः परमं पवित्रं प्रोवाच सम्यगृ-
षि संघजुष्टम् ॥ इति श्वेताश्वतरो
पनिषदि । अत्याश्रमीसर्वदास कृद्वा-
जपेदिति कैवल्योपनिषदि च श्रूयमा
णस्यात्याश्रमिशब्दस्य । "ब्रह्मचारी-
गृहस्थश्चवानप्रस्थश्चभिक्षुकः। अति-
वर्णाश्रमीचेतिक्रमा च्छ्रेष्ठाविचक्षणाः ॥

गृहस्थोपि वनस्थस्सयतेरप्यम्बुजेक्षण।
विद्योत्कर्षबलेनैव गुरुर्भवतिनान्यथा॥
वानप्रस्थाश्रमस्थोपि तथा सन्यासिनोहरे। विद्योत्कर्षबलेनैव गुरुर्भवति नान्यथा॥ अतिवर्णाश्रमीप्रोक्तोगुरुस्सर्वाधिकारिणां। न तस्यापि भवेच्छ्रेष्ठो यथाहंपुरुषोत्तम॥ अतिवर्णाश्रमी साक्षाद्गुरूणांगुरुरुच्यते। यस्यवर्णाश्रमाचारोगलितस्स्वात्मदर्शनात्। सवर्णानाश्रमान् सर्वानतीत्यस्वात्मनिस्थितः॥ योतीत्यस्वाश्रमान् वर्णानात्मनैवस्थितः पुमान्। सोतिवर्णाश्रमीप्रोक्तस्सर्ववेदान्तवादिभिः॥ पञ्चाक्षरीपरा विद्याशिवज्योतिरवाप्तये। ओंकारः प्रणवस्साक्षाद्विद्यानां बीजमुत्तमम्॥ तस्मादशेषतत्त्वानिप्रणवेन विशोधयेत्। भस्मनो-

द्धूलयेद्देहमग्निरित्यादिसप्तभिः। त्रियायुषञ्जमदग्नेरिति कुर्यात्त्रिपुण्ड्रकम् ॥ विचिन्तयेदात्मनिशम्भुमीशंशिवं परंशान्तमुमासहायम् । भस्माङ्कमाविष्कृतदीप्तदेह मत्याश्रमाचारमिमं वदन्ति ॥ अत्याश्रमोयं सर्वेषु चतुर्ष्वप्याश्रमेषु च। यः पशुस्सपशुत्वस्तुव्रतेनानेन सन्त्यजेत् ॥ विशोध्यपञ्चतत्त्वानि प्रणवेनाथवा पुनः । संस्थाप्यमयिचात्मानं निर्मलेपरमेश्वरे ॥ ल्पावयित्वात्मनोदेहं तेनैवज्ञानवारिणा । एषपाशुपतोयोगः पशुपाशविमुक्तये। सर्ववेदान्तसारोऽयमत्याश्रम इति श्रुतिः ॥ वृतं पाशुपतं येन सम्यगाचरितं मुदा। तस्यज्ञानं विजायेत तेनपाश विमोचनमित्यादिकामिकस्कान्दले-

श्रुतिशिवागमवचनैरतिवर्णाश्रमिणांव-
र्णाश्रमधर्माचरणशीलेभ्य उत्कृष्टत्वप्र-
तिपादनात् अत्याश्रमित्वं पञ्चमुख-
समुद्भूतपञ्चमाश्रमवत्सु वीरशैवब्रा-
ह्मणेषु पर्यवस्यतीति न पूर्वोक्ता-
राध्यपरत्वशङ्कावकाशः । अत एव-
पूर्वोक्तक्रिमिकीटपतङ्गेभ्य इत्यादिवी-
रशैवोत्कर्षप्रतिपादकशङ्करसंहितावच
नमप्यव्यभिचरिततया पर्यवस्यति ॥
ननु अत्याश्रमप्रतिपादकश्रुत्यागम-
पुराणवचनानिनतेष्वेव पर्यवस्यन्ति-
किन्तु वर्णाश्रमाचारवत्सुआराध्यब्रा-
ह्मणेषु तदतिरिक्तेष्वपिपर्यवस्यन्ति ॥
तथाहि ॥ अतिवर्णाश्रमाचार इत्य-
त्रब्राह्मणक्षत्रियवैश्यशूद्राश्चेति च-
त्वारोवर्णाः । अशूद्राणामदुष्टकर्म-

णामुपनयनमध्ययनमग्न्याधानं फलव-
न्ति च कर्माणियोग्यानि ब्रह्मचर्यगार्ह-
स्थ्यवानप्रस्थत्वसन्यासित्वभेदेनाश्र-
माश्चत्वारः । तत्र गुरुकुलवासभि-
क्षाचरण वेदाध्ययनादिकं प्रथमाश्र-
मधर्मः । गर्भाधानादिगार्हस्थ्यकर्म सप्त-
पाकयज्ञ सप्तहविर्यज्ञसप्तसंस्थायज्ञ ।
पञ्चमहायज्ञ रूपाष्टाविंशत्संस्काराः ॥
यजनयाजनाध्ययनाध्यापनदानप्रति-
ग्रहणरूपाणि षट्कर्माणिद्वितीयाश्रम
धर्माः । वनवासदारकन्दफलाहार-
नियमजटाजिनधारणकृच्छ्रचान्द्राय-
णाद्याचरणं तृतीयाश्रमधर्मः । पूर्वो-
क्ताश्रमत्रतयधर्मत्यागपूर्वकं ब्रह्म-
विचारभिक्षाचरणरागद्वेषादिवर्जन-
वाङ्नियमैक वासयोगाभ्यासादिकं तु

रीयाश्रमधर्मः । अतिवर्णाश्रमाचार इत्यत्र अतिक्रान्तः वर्णाश्रमाचारानिति अत्यादयःक्रान्ताद्यर्थेद्वितीयेति व्याकरणानुशासनमर्यादयाशब्दार्थोयोजनीयः ॥ स च पूर्वोक्तधर्माचरणवत्सुसम्भवति। अतिवर्णाश्रमाचारादिशब्दानां प्रतियोगिप्रसक्तिसापेक्षाणां प्रतियोगि सम्बन्धं विना कृतेषु आराध्यव्यतिरिक्तेषु वृत्तिः कथमुपपद्यते। निषेधवाचकानां शब्दानां प्रतियोगिसम्बन्धसम्भावना शालिष्वेव वर्तनौचित्यादिति चेन्न। "अतिवर्णाश्रमाचाराः सम्भवन्त्यूर्ध्ववक्त्रतः। तेवैसाक्षान्महादेवेमोदन्तेह्यागमेषु च ॥ पञ्चास्यपञ्चम सुखाद्यथाजातास्तथाधिकाः। पञ्चमास्सर्ववर्णेभ्योमङ्गक्तामतिप्रयास्तदा लिङ्गं शिवोभवेत्क्षेत्रमङ्गं संयोगः

आश्रयः । तस्माल्लिङ्गाङ्गसंयुक्तो योऽपि सोऽत्याश्रमीभवेत् । "इशानकास्याद्गणवंशजानां लिङ्गाङ्गशोभामोक्षमार्गैकनिष्ठाः" । लिङ्गाङ्गसामरस्यञ्च शरीरे लिङ्गधारणम्' । नियमेनैव कृत्वा ते मुक्तास्संसारबन्धनादिति,, कामिकाद्यागमक्रियासारोदाहृतवेदान्तसारोपनिषदादिवचनैर्वीरशैवानामति वर्णाश्रमाचारादि शब्दानां रूढ्याभिधेयत्वस्य सम्यग्वक्तुं शक्यत्वात् । न चात्याश्रमिशब्दः कृताश्रधर्माचरणेषु वर्तते । न प्रतियोगि शब्दत्वादिति यदुपपन्नम् अपहतपाप्मादिशब्दानां वैदिकानां ब्रह्मणिप्रतियोगिनां पाप्मनामसम्भवात् प्रवृत्तिर्नस्यात् । किञ्च । शुकवामदेववत् जन्मान्तरीयवर्णाश्रमधर्मप्रकल्पनान्नवैय्याकरणानुशासनविरो-

धः, । न चैवमत्याश्रमि शब्दार्थस-
ङ्गतिनिर्वहणे वीरशैवातिरिक्तानामि-
तरेषां विरक्तानां ज्ञानिनां शूद्राणाम-
प्यत्याश्रमित्वप्रसङ्ग इति वाच्यम् ।
अतिवर्णाश्रमाचार इति वचनत्रया
वगमितरूढत्वशालिनः अत्याश्रमि-
शब्दस्य केवलयोगेन पङ्कजशब्दस्य तृ-
णानीलोत्पलादाविववृत्तेरयुक्तत्वात् रू-
ढिर्योगमपहरतीतिन्यायात्। अतएवा-
हीनशब्दस्य अहः खकृतावितिसूत्रम-
र्यादयाअहर्गणवाचिनः द्विरात्रित्रिरा
त्रादिसाध्यक्रतु परत्वमेवहीनोनभव-
तीत्यही न इति योगेन वैदिकादिक
श्रुत्यान क्रत्वन्तरपरमिति "अहीनोवा-
प्रकरणादावित्यधिकरणे" तृतीयाध्या-
ये पूर्वतन्त्रे अयमेवन्यायो व्युत्पादित
स्तस्मादत्याश्रमिशब्दो वीरशैवेषु स-

म्भवति ॥ यद्वायोगशक्त्या वीरशैवप
रत्वं कल्पयितुं शक्यते । तथा हि । "तु
हिच स्महवैपाददपूरणे पूजनेस्वतीत्य-
मरकोशेन स्वतिपूजायामितिसूत्रेण च
अतिशयिताः„ पूजिताः वर्णाश्रमाचा-
रायेष्वति व्युत्पत्तेः नचैतानिवचनानि
अत्याश्रमिशब्दत्वस्याथर्वशिरोजाबा-
लोक्तेतिकर्तव्यतापूर्वकानुष्ठेयपाशुप-
तापरपर्यायभस्मरूद्राक्षधारणरूपस्य
स्वात्मज्ञानपूर्वकाखिलसंस्कारपरि-
त्यागत्वस्य यत्किञ्चिज्जातीयस्य लिङ्ग-
धारणादिनारहितस्य सहितस्य वा
आराध्यविप्रस्य वाउतकेवलस्यवा
ऽत्याश्रमित्वसम्बन्धवाचकानि न केव-
लवीरशैव प्रतिपादकानीति वाच्य-
म् ॥ वर्णाश्रमधर्मवतामाराध्यविप्रा-
णामत्याश्रमि शब्दाभिधे यताऽ[illegible]य-

त्वात् । परमेश्वर पञ्चमुखसम्भूत-प्रमथगणनायक घण्टाकर्णगजकर्णरेणुकदारुकगोत्रजातानां केवलातिवर्णाश्रमधर्मानुष्ठायिनां केवलवीरशैवानामेवोक्तश्रुत्यागमपुराणेष्वत्याश्रमिशब्दप्रतिपादनौचित्यात् । न च प्रमथानां परमेश्वर पञ्चमुखसम्भूतानामत्यन्तरङ्गाणां प्राकृतमनुष्यवत् प्राकृतस्त्रीपरिग्रहाभावात् कथमेतेषां तद्वंशजत्वं तथापि यद्यस्तितर्हि आराध्यविप्राणामपितद्वंशजत्वमस्तीति वाच्यम् । "द्वारोपोपस्पृशाद्वारापायस्वाहा द्वराप्युपस्पृशाद्वाराप्यै स्वाहेति"-ईशानबाल्याख्यकर्मणि द्वारापशब्दवाच्यनन्दीकेश्वरस्य तत्पत्न्याः सुयशादेव्याः पुराणादिषु प्रसिद्धायाः विद्यमानत्वेन "लोकानुग्रहार्थं परमेश्वरस्य

किरातरूपादिधारणवत् प्राकृतस्त्रीप-
रिग्रहसम्भवेन तद्वंशजत्वस्यापि केव-
लानां वीरशैवानां सम्भावनात् आरा-
ध्यविप्राणान्तु सर्वथा तद्वंशजत्वस्या
नुचितत्वात् यदि वीरशैवधर्माचरणा-
भिमाने तद्वंशजत्वमस्तीत्युच्येत । त-
र्हि भारद्वाजागस्त्याङ्गीरसविश्वामित्र-
भार्गववाशिष्टइत्यादिगोत्रजननि-
मित्तार्हत्वं न स्यात् । न चेष्टा-
पत्तिः । वृश्चिकभयात्पलायमानस्य
आशीविषमुखनिपतनमिव ब्राह्मण-
त्वस्यापि भङ्गस्स्यात् न च ऋषिवंश-
जत्वं प्रमथवंशजत्वमुभयवंशजत्व-
मस्माकमाराध्यविप्राणां सम्भवतीति
वाच्यम् । किमुत्पत्या उभयवंशजत्व
मुच्यते ॥ किं शिष्यसांप्रदायेन वा ।
नाद्यः । "गर्धभेन सम्भवति तस्माद्गर्ध-

भोर्ध्वरेता" इति श्रुत्यागार्धभवदे-
कस्योभयवीर्योत्पत्तौ अत्यन्तलोक-
हास्यतास्यात् । नद्वितीयः । तादृशसं
प्रदायस्य गौणतयाचतुर्थवर्णस्यापि
संभवात् तस्मात् केवलानां वीरशैवानां
गणवंशजत्वात् । अत्याश्रमिशब्दवा-
च्यत्वेन सर्वोत्तमत्वं युक्तमेव। अत एव
पूर्वोक्तन्यायानुकूलवचनानितैष्वेव स-
म्यगुपपादयितु मुचिततराणि॥ "तथा
हि विशुद्धाः प्राकृताश्चेति द्विविधामा
नुषास्मृताः । शिवसंस्कारिणश्शुद्धाः
प्राकृता इतरेमताः ॥ वर्णाश्रमादि-
धर्माणां व्यवस्थाहि द्विधामता । ए-
काशिवेननिर्दिष्टाब्रह्मणाकथितापरा॥
शिवोक्तधर्मनिष्ठातु शिवाश्रमनिषे-
विणाम् । शिवसंस्कारहीनानां धर्मः
पैतामहस्मृतः„ ॥ इति तस्मात्मा

कृत धर्मभेदभिन्नमार्गतयागणावंशजा नामप्राकृतानां वीरशैवानामतिवर्णा श्रमशब्दवाच्यानां पञ्चमाश्रमिणामन-नितरसाधारणसर्वातिशयत्वमुपपद्य त एवेति न कोपि शङ्कावकाशः ॥ तस्मात्तन्मतस्य सर्वोत्तमत्वं सिद्धमेव । तथैव प्रमाणानि । "नवीरशैवसदृशंमत-तमस्तिजगत्त्रिये । सर्वभोगप्रदं पुण्यं शिवसायुज्यदायकम् ॥ यथामत्सदृशो-नास्ति पुरुषाणां त्वयासमा । स्त्रीणां तथावीरशैव सदृशं नास्तिवैमतम् ॥ अपि पापशतं कृत्वा ज्ञानतोऽज्ञानतो पिवा । वीरशैवमतं प्राप्तश्शिव एव न संशयः ॥ लिङ्गधारणमात्रेण शिव-त्वप्राप्तिकारणात् । शैवं ममसमतं देवि-सद्योमुक्ति प्रदायकम् ॥ यथानदीनां सर्वासां पुण्यं भागीरथीशिवे । यथैव-

भवतीसर्वयोषितां पुरुषेष्वहम् ॥
यथैव काशीक्षेत्राणां तीर्थेषु मणिक-
र्णिका । ममपञ्चाक्षरीमन्त्रः सर्वमन्त्रे-
षुवैयथा ॥ यथैव सर्वलोकेषु कैलास-
स्थानमावयोः । वीरशैवमतं देविमम
सर्वोत्तमोत्तम् ॥ इति पारमेश्वर वीरा
गमवचनैश्च शिवस्य श्रुतिस्मृति पुरा-
णान्यायसिद्धसर्वदेवोत्तमोत्तमवद्वीरशै-
वमतस्य सर्वातिशयत्वं सिद्धम् । तन्म-
तनिष्ठजात्याश्रमाचारभेदेन सामा-
न्यवीरशैवो विशेषवीरशैवोनिराभा-
रवीरशैवश्चेति त्रिविधः । तत्तल्लक्ष-
णानान्तु क्रियासारवीरशैवाचारकैस्तु
भवीरशैवानन्दचन्द्रिकादिषु विस्तारे-
णोक्तत्वात् तदनुगत संप्रदाय सिद्धत-
याविचार्यमाणेक्षत्रियावैश्यादयोलि-

ङ्गनः स्सामान्यवीरशैवाः। भक्तमाहेश्वरा राध्याभिधब्राह्मणा लिङ्गधारिणः विशेषवीरशैवाः। लिङ्गाङ्गिब्राह्मणयतिनो निराभारा इति निर्णीयते अत एव "जटीमुण्डीशिखीवापिकाषायवसनान्वितः। निस्पृहो निजलिङ्गैक्योभिक्षाशीभयवर्जितः॥ कंथाकमण्डलुधरो भूतिरुद्राक्षसंयुतः। दण्डकौपीनधारोचनिराभार इति स्मृतः॥ इति सूक्ष्मतन्त्रवचनैर्निराभारवीरशैवलक्षणप्रतिपादनात् विशेषवीरशैवापेक्षयाचरजङ्गमादिशब्द वाच्यः निराभारवीरशैवदेशिकोत्तमः विरक्ततया सर्वोत्तमोत्तमइतिनिर्विवादः किञ्च। "लिङ्गं स्यादिष्टरूपन्तु जङ्गमः प्राणलिङ्गकम्। भावलिङ्गंगुरुःप्रोक्तस्त्रिविधन्त्वेकमुच्यते॥

जानीयात्सच्चिदानन्ददेशिकोत्तमजङ्गमात् । नित्यं पूर्णात्मप्रसादं वा स्वात्माभावेन भावयेत् ॥ वीरागमे ॥ लिङ्गाङ्गीगुरुलिङ्गे च त्रिविधन्त्वेकमुच्यते ॥ प्रासादो मुक्तिमूलञ्चप्रसादोलिङ्गमुच्यते । सिद्धान्तशिखामणौ ॥ "एक एव शिवस्साक्षात्सर्वानुग्राहकः प्रभुः । गुरुजङ्गमलिङ्गात्मावर्तते भुक्तिमुक्तिदः,, ॥ इति वचनैर्गुरुलिङ्गजङ्गमानां सच्चिदानन्दस्वरूपाणां यथा ब्रह्मणस्साच्चिदानन्द लक्षणलक्षितस्य व्यवहारदृष्ट्यासत्वेन चित्वेन आनन्दत्वेनभिन्नत्वेपि परस्परस्वरूपेण यथाभेदो ङ्गीक्रियते । तद्वद्गुरुलिङ्गजङ्गमानां भिन्नत्वेपि शास्त्रमर्यादयातत्वतश्चैक्यमेव सिद्धं भवति ॥ किञ्च । तत्स्व-

रूपस्य त्रैकालिकाबाध्यतारूपसद्रूप-
स्याधिक्यम् । इत्यस्त्वेदपि॥ चिद्रूपस्य
स्वप्रकाशस्य सर्वप्रार्थनीयत्वाभावेन
परमप्रेमास्पदत्वाभावेन तदुभयरूप
योरानन्दस्वरूप एव विद्यमानत्वेन
तस्य तथैवचरतत्वस्य सर्वाभ्यर्हिततत्व-
म् । तथाहि सिद्धान्तशिखामणौ ।
लिङ्गन्तुद्विविधं प्रोक्तंजङ्गमाजङ्गमात्म-
ना । अजङ्गमन्तुयल्लिङ्गं शिवयोगीति
विश्रुतम् ॥ लिङ्गस्य जङ्गमञ्चैव तथा
धक्यं वदामिते । जङ्गमं ज्ञानरूपन्तु।
क्रियारूपन्तु लिङ्गकम् ॥ स्वायं भुवा
गमे॥ लिङ्गद्वयं समाख्यातंचरञ्चाचार
मेव च । चरन्त्वतिथिरूपं स्यादचरं
पार्थिवादिकम् ॥ चरेसदावसत्येव
प्रीतियुक्तोमहेश्वरः । अचरे मन्त्रसं-

स्कारैः स्वयन्तिष्ठत्सदाशिवः ॥ शिव-
धर्मशास्त्रे । स्थिरेसदावसत्येव प्रीति-
युक्तोमहेश्वरः ॥ अचरेमन्त्रसंस्कारेज्ञे-
योनित्यं महेश्वरः । शिवरहस्ये ॥
पदंदेहमितिख्यातंपदार्थः प्राण एवच।
उभयोरन्तरं यद्वतद्वत्स्याल्लिङ्गजङ्गमे ॥
स्थावरं जङ्गमञ्चेतिद्विविधं लिङ्गमु-
च्यत । जङ्गमस्यापमानेनस्थावरं
निष्फलं भवेत् ॥ शैवरत्नाकरे ।
लिङ्गक्षेत्रं गुरुस्थानं गुरुक्षेत्रन्तु जङ्ग-
मः । जङ्गमस्तुनिराभारोभाराभरवि-
वर्जितः ॥ इत्यादिसिद्धान्तशिखामणि-
स्वायंभुवागमशिवधर्मशास्त्रशिवरह-
स्यादिवचनैश्चचराचररूपस्य लिङ्ग-
स्यद्विविधस्य मध्ये मन्त्रसंस्कारायत्त-
महिमस्थिरलिङ्गापेक्षयाचरलिङ्गस्यसा

र्वैकालिकषट्स्थलज्ञानसंपन्नस्य ज-
ङ्गमशब्दाभिधेयस्य स्थिरलिङ्गापेक्षा-
या आधिक्यं सिद्धमेव ॥ अत एव ।
आरग्वधेच बिल्वे च लिङ्गे च गुरुवि-
ग्रहे । शिवयोगिशरीरे च सदासन्नि-
हितश्शिवः ॥ यदेकोब्रह्मविद्भुक्ते ज-
गत्तपर्यंते खिलम् । इत्यादिवचना-
निज्ञानिनश्चरलिङ्गस्याधिक्यप्रतिपा
दकानिबहूनि सङ्गच्छन्ते । वैद्यशा-
स्त्रे । "इतिहास पुराणेषु शिवस्याप्य-
तिथिर्गुरुः ॥ अतिथेः पादसलिलम-
धिकं हि जगत्त्रये । वीरागमे ॥ जङ्ग-
मस्य प्रसादान्नं नैवेद्यार्थं प्रकल्पयेत् ।
पादाम्बुजजलस्नानं विशेषोहिमयो-
च्यते ॥ पारमेश्वरे । पादाभिषेकसलि
लैर्लिङ्गमज्जन मुत्तमम् । तस्मात्सदज्ञ-

नैवेद्यं तथा मुक्तिफलं ध्रुवम् ॥ ब्रह्मा-
ण्डपुराणे ॥ जङ्गमानां पादतीर्थाल्लि-
ङ्गमज्जनमुत्तमम् । तत्प्रसादान्महा-
देविनैवेद्यं शुभदंस्मृतम् ॥ तस्माज्जङ्ग
मलिङ्गस्य प्रसादेनमदार्पणम् । अभि
षेकजलस्नानं विशेषं ममकथ्यते ॥
इत्यादिवेदशास्त्रवीरागमपारमेश्वर
ब्रह्माण्डपुराणवचनैर्लिङ्गस्य जङ्गम-
पादोदकस्नानतत्प्रसादसमर्पणप्रति
पादनाल्लिङ्गापेक्षया जङ्गमस्याधिक्यं
सिद्धमेव ॥ ननु इष्टलिङ्गपूजाप्रक-
रण एव एषांवचनानांश्रूयमाणत्वा-
दिष्टलिङ्ग एवचरपादोदकमज्जनं त-
त्प्रसादनिवेदनञ्च प्रकरणात्प्राप्तम् ॥
नस्थिरलिङ्गे अप्राकृतत्वादिति चेन्न ।
स्थिरलिङ्गार्चकोमर्त्यः न शुद्धः पङ्क्ति
कर्मसु ॥ धृतलिङ्गार्चकोमर्त्यः पावनः

पङ्क्ति कर्मसु ॥ चितिञ्चचिति काष्टञ्च
यूपं चाण्डालमेव च ॥ स्पृष्ट्वादेवलकञ्चै
वसवासाजलमाविशेत् । त्रिवर्षंदेव-
तापूजामन्यार्थं यः करिष्यति । सर्वैदे-
वलकोनामसर्वकर्मबहिष्कृतः ॥ इत्या-
दिवचनैः स्थिरलिङ्गार्चकस्य देवलक-
शब्दवाच्यतया सहवाससहपङ्क्ति-
भोजनादेस्तथानिषेधदर्शनात् । पा-
वित्र्यादुत्कृष्टत्वप्रतिपादनाच्च इष्टलि-
ङ्गस्थिरलिङ्ग पूजाकर्तॄणामुत्कर्षात्वाप-
कर्षत्व प्रतिपादना दिष्टलिङ्गस्थिरलि-
ङ्गयोः क्रमेणोत्कर्षापकर्षौनिश्चितव्यौ ॥
तथा च जङ्गमत्वस्य सर्वाभ्यर्हित-
त्वाल्लिङ्गप्राणरूपत्वाच्चस्थिरलिङ्गापे-
क्षया प्राप्तोत्कर्षे इष्टलिङ्गेपि जङ्गम-
पादोदकाभिषेचनपादविन्यासादिकै-

मुतिकन्यायसिद्धम् । एतदर्थानुसारी-
णिवचनानि “लिङ्गाङ्गीचमम प्राणो-
लिङ्गाङ्गीचममप्रभुः । लिङ्गाङ्गीमामको-
जीवोलिङ्गाङ्गीममरक्षकः ॥ लिङ्गाङ्गीम-
मकर्ता च लिङ्गाङ्गीममसद्गुरुः । पर-
माद्वैतविज्ञाननिष्ठस्यास्य महात्म-
नः ॥ शुश्रूषाक्रियते येन तत्पादौमम-
मस्तके । निरपेक्षं मुनिंशान्तं निर्वैरं
समदर्शिनम् ॥ अनुव्रजाम्यहं देविपू
रयत्यङ्घ्रिरेणुभिः । वीरागमे ॥ स-
र्वप्राणिहितार्थाय मुद्रापञ्चकधारिणः
षट्स्थलज्ञानवन्तश्चानादिजङ्गममूर्त-
यः ॥ तएव स्वस्वपादाब्जं निधाय म-
समस्तके । दत्वापादोदकंमह्यं प्रसा-
दं मेनकात्मजे । कुर्वन्तिवैपवित्रं माम-
मन्तेप्यैष्यन्तिमाममी ॥ भक्तोममप्रियो

देविभक्तः प्राणोममैव तु । मत्तोधिको
हिसद्भक्तस्तस्माद्भक्तं नमाम्यहम् ॥
इत्याद्यागमवाक्योक्तं तान्त्रिकं वैदिकं
न चेत्। त्रिपादूर्ध्व उदैन्मन्त्र अस्मि-
न्नर्थे प्रवर्तते ॥ त्रिपादिति त्रयः
पादाः यस्य तस्मात् त्रिपाच्छिवः ।
गुरुर्लिङ्गं जङ्गमश्चतेषां पादत्रयस्त्रीपा-
त् । ऊर्ध्व उत्कृष्टएवासावुदैदुदित-
वाञ्छिवः ॥ पुरुषोवैरुद्र इति पुरुषत्वं
शिवस्यतत् । पादोस्येहशिवस्यैवलब्धो
यन्नभवत्पुनः॥ पुनःशब्दोविशेषार्थेवा-
चीवैशेष्यमत्र च। "असान्निध्यं जङ्गम-
स्य गुरोश्चापिततस्तथा ॥ विष्वङ्व्या
क्रामदित्येवं व्यापकत्वं शिवस्य च ।
अनुसन्धाय मनसागुरुजङ्गमतामपि ॥
अशनानशनेचोभे सम्भवेचाशनं भवे-

तु ॥ अत्तुं योग्यं भवेत्तत्रत्रयं यन्नलभ्य
ते । तदात्वनशनं प्रोक्तमदं पातित्व-
मश्नुते ॥ त्रिपादमात्रमन्त्रेऽस्मिन् त्रि-
पादोदकधारणं । इतिचेत्तत्रमन्त्रान्ते-
साशनानशने उभे ॥ गुरुलिङ्गचराणा-
न्नुपादत्रयमनूद्य च । विहिते तत्रभेद-
श्चद्वयोरेकस्य सम्भवे ॥ वचनान्तर-
सिद्धार्थाः सन्धेयास्तत्रतानि तु । प्रा-
णलिङ्गपरोभक्तोलब्ध्वा तत्रपदोदकम् ।
गुरुजङ्गमपादोदं लब्धवानेवभक्तितः ॥
समवाये गुरोस्तत्रगुरोर्लब्ध्वापदोदकं
पदोदकंजङ्गमस्यलब्धवान्मनसैवतम् ॥
गुरुलिङ्गचराणान्तु समवाये तु भक्ति-
मान् । पादोदकं चराल्लब्ध्वा गुरोर्लि-
ङ्गस्य भक्तिमान् ॥ अश्नीयादशनं भ-
क्तेरन्यथा नशनं भवेत् ॥ तच्चेदनशनं

प्रोक्तमभक्ष्यमसमर्पितम् । अत एव शिवानन्दलहर्यामभियुक्तवचनमपि॥ मार्गावर्तितपादुकापशुपतेरङ्गस्य कूर्चायते गण्डूषाम्बुनिषेचनं पुररिपोर्दिव्याभिषेकायते ॥ किञ्चिद्भक्षितमांसशेषकबलं नव्योपहारायते भक्तिः किन्न करोत्यहोवनचरोऽभक्तावतंसायते ॥ तस्माल्लिङ्गे जङ्गमपादोदकमुचिततरमिति सिद्धम् ॥ ननु एतादृशपूर्वोक्तवचनानां स्वार्थे प्रामाण्याभावात् एभिः वंचनैः कथं तीर्थप्रसादसमर्पणपादविन्यासादिकंकर्तव्यत्वेनाङ्गीकर्तुं शक्यमिति चेदुच्यते ॥ "औदुम्बरोयूपोभवति" उपांशुयाजमन्तरायजतीत्यादावविद्यलट्त्वेन भासमानस्याख्यातस्य लेट्त्वपरिणामं

कृत्वाविधायकस्याङ्गीकर्तुमुचितत्वात्।
न च वेदेषु लेट्त्वपरिणामाङ्गी-
कारेपि आगमवचनेषु तथाङ्गीकर्तु-
मशक्यत्वात् त्वदभिमतसिद्धिः कथं
संगच्छत इति वाच्यम्। तर्हि। इति
हासपुराणस्मृति वाक्येष्वपि एता-
दृशन्यायप्रवृत्तिर्नस्यात्। नचेष्टापत्तिः
"स्तेयं कृत्वा गुरुदारांश्चगत्वासुरां
पीत्वा ब्रह्महत्यां कृत्वा भस्मच्छन्नो-
भस्मशय्याशयानो रुद्राध्यायीमुच्य
तेसर्वपापैः" इति शातातपस्मृतिवच-
नस्य "गायत्रीजपकोटिस्तु ब्रह्महत्यां-
व्यपोहति॥ एकादशगुणान्वापि रुद्रा
नावृत्यधर्मवित्। महापापैरपिस्पृष्टो
मुच्यते नात्रसंशयः॥ सन्ध्यास्नानंजपो
होमं देवानांच पूजनं। आतिथ्यं वैश्व-

देवं च षट्कर्माणिदिने दिने ॥ इत्या
दिलोकप्रसिद्धानां प्रायश्चित्तकाण्डेवि
ज्ञानेश्वरमतवादिधर्मशास्त्र व्याख्यातृ-
भिराचारकाण्डेच परिगृहीतानांवच
नानां च स्वोक्तार्थे प्रामाण्यं नस्यात्
तस्मादुदाहरणमात्रेण न्यायस्य प्रवृत्ति
रिति न भ्रमितव्यम्। ननु एतेषां
स्मृति पुराणादीनां वेदमूलकत्वात्।
वेदवत्प्रामाण्यस्थापनसम्भवेप्यागमव-
चनानां तथा प्रामाण्यं न सम्भवतीति
चेन्न। वेदागमयोरेककर्तृकत्वात् वे-
दाविरुद्ध धर्मपतिपादकत्वाच्च निश्व-
सितवेदापेक्षया ताल्वोष्ठपुटव्यापारो
च्चारित कामिकाद्यागमानां ऋग्वेदय
जुर्वेदवत् वामदक्षिणनेत्रवच्च समप्र-
धानत्वात् प्रमाण्यं सिद्धमेवेति वेदा

गमवचनैर्विधीयमानं कर्मशिष्टैराचर-
णीयमिति सर्वं समंजसं ॥

श्री षट्स्थल चक्रवर्ति निरंजन
जङ्गम स्वरूपतो टदसिद्धेश्वर
कारुण्यप्रसाद पात्रसुधा
पुरस्थचन्नबसवेश्वरस्वा-
मि विरचितवीरशै-
वोत्कर्षप्रदी-
पिका परि-
समाप्ता।



श्रीविश्वनाथाय नमः ।

# अशुद्धशुद्धपत्रिका ।

| पृ. | पं. | अशुद्धः | शुद्धः |
|---|---|---|---|
| १ | १ | यत्क्राणीताः | यत्प्रणीताः |
| १ | १४ | धनेशोपमा | धनेशोपमाः |
| ६ | १२ | प्रतिपाध्य | प्रतिपाद्यः |
| ७ | ५ | विराड्रूप | विराड्रूप |
| ८ | १७ | पिङ्गत्वो | पिङ्गलत्वो |
| ९ | १५ | हस्त्रशी | सहस्त्रशी |
| १२ | ३ | त्रितीय | तृतीया |
| १२ | ७ | हृत्युण्ड | हृत्पुण्ड |
| १२ | १० | ब्रम्ह | ब्रह्म |
| १९ | १३ | तौत्तरीय | तैत्तरीय |
| २१ | ११ | वद्यपी | यद्यपी |
| २५ | १७ | साविति | विति |
| ३३ | १३ | विस्तीर्णां | विस्तीर्णा |
| ३५ | १९ | नन्टपदस्य | नन्दपदस्य |
| ४४ | ५ | प्रतोति | प्रतीति |
| ४७ | ९ | वाधात् | बाधात् |
| ६३ | १ | वटन्ति | वदन्ति |

| पृ. | पं. | अशुद्धः | शुद्धः |
|---|---|---|---|
| ६३ | २ | साधाण्येनैव | साधारण्येनैव |
| ६४ | १३ | लाभावत् | लाभात् |
| ११९ | १५ | दपपन्नंभवनि | दुपपन्नंभवति |
| १२७ | ५ | लिङ्गात्यनेक | लिङ्गाद्यनेक |
| १२८ | २ | भत्कगा | भक्तगा |
| १२८ | ९ | संध्याथंदम | संध्यावन्दन |
| १२८ | १० | विनियुत्क | विनियुक्त |
| १३० | ५ | विनियुत्क | विनियुक्त |
| १३१ | ४ | तिष्ठतीइति | तिष्ठतीति |
| १३२ | ८ | भोत्काचैव | भोक्ताचैव |
| १३५ | ५ | नसिद्ध्ये दिति | नसिद्धेदिति |
| १३६ | ८ | अपरिपक्कान् तः | अपरिपक्कान्तः |
| १४४ | ६ | तत्प्रा | तप्रा |
| १४५ | १० | पवित्र्या | पवित्र्या |
| १४८ | ४ | त्सन्नसाखा | च्छिन्नशाखा |
| १५० | ३ | न्यासनिरुक्तेश्च | व्यासनिरुक्तेश्च |
| १५१ | १३ | मेत्तरभागे | मोत्तरभागे |
| १७९ | २ | ल | ल्ले |
| १७९ | २० | कोाहऽमिति | कोऽहमिति |
| १९४ | १८ | यदुक्त | यदुक्तं |
| १९४ | २१ | सर्वमूर्तनि | सर्वमूर्तानि |

| पृ. | पं. | अशुद्धः | शुद्धः |
|---|---|---|---|
| १९६ | १६ | दिष्ट | द्विष्ट |
| १९९ | १ | आद्धदि | आद्धादि |
| २०३ | १५ | दित्य | नित्य |
| २११ | ७ | संपका | संपर्का |
| २१४ | ७ | नित्यद्ध | नित्यशुद्ध |
| २२३ | ५ | बहीष्कार्य | बहिष्कार्य |
| २३१ | १२ | विरोधपत्ति | विरोधापत्ति |
| २३२ | २१ | तात्पर्यकात्वानङ्गीकार | तात्पर्यकत्वाङ्गीकार |
| २३३ | १ | एतद्दग्रन्थ | एतद्ग्रथ |
| २४२ | १ | धारयन्त्यलिकग्रेषु | धारयन्त्यलिकाग्रेषु |
| २४६ | १२ | गर्भादीनाथ | गर्भादीनाम् |
| २५४ | १६ | दोषोद्धाटनं | दोषोद्घाटनं |
| २५८ | ३ | शुभां | शुभं |
| २६३ | १२ | कालपरिपाकवात्प | कालपरिपाकवशात्प |
| २६४ | १६ | रंगे | रङ्ग |
| २६७ | १० | द्वौ | द्वा |
| २६७ | १० | द्वौतु | द्वौसु |
| २७१ | २ | गादद्यादद्याद्धानं | गांदद्याद्धान् |
| २७१ | ८ | दहन | दहनं |
| २७१ | १० | मुनिसत्त | मुनिसत्तम |
| २७८ | १४ | संन्यस्य | सन्यस्य |

| पृ. | पं. | अशुद्धः | शुद्धः |
|---|---|---|---|
| २७८ | १६ | संन्यस्य | सन्न्यस्य |
| २८० | ७ | मित्य | मित्या |
| २८२ | १५ | विधनादिति | विधानादिति |
| २८६ | ४ | काला | काल |
| २८६ | ११ | वेश्वदेवं | वैश्वदेवं |
| २८७ | ११ | वक्यानुप | वाक्यानुप |
| २८९ | ८ | स्तत्व | स्तत्त्व |
| २९८ | १३ | त्यृग् | पृथग् |
| ३०२ | १५ | द्द् | दि |
| ३०२ | ० | द्द् | द |
| ० | १३ | दा | द |
| ३०६ | १४ | संप्राप्ता | संप्राप्ते |
| ३०७ | ११ | सापिण्डय | सापिण्ड्यं |
| ३११ | ५ | पाषा | पाष |
| ३११ | १२ | संन्या | सन्न्या |
| २११ | १५ | परकुटागम | परमकुटागम |
| ३१८ | ६ | पाषण्डातेनाग | पाषण्डास्तेन |
| ३३७ | १३ | कैस्तुभ | कौस्तुभ |
| ३३५ | ५ | वीरशैवानां | वीरशैवानां |
| ३४२ | ३ | अधिक्यं | ऽऽधिक्यं |
| ३४२ | ७ | त्तपर्यते | त्तर्पयते |
| ३४९ | १ | विधायकस्य | विधायकत्वस्य |
| ३४९ | ६ | ब्रह्महत्यां | ब्रह्महत्यां च |



प्रस्तावे विदुषां यस्य प्रथमं नाम गृह्यते ।

सोऽयं शिवकुमाराख्यः पण्डितः पण्डिताग्रणीः ॥ १ ॥